# अथ व्यङ्ग्यार्थकौमुदी ।

श्रीगणेशाय नमः ।

सर्वे साधुजनाः सदा यतहृदः सत्संप्रदायाबलं
यज्ज्ञानाय कणादगौतममतान्यालोच्य तत्त्वार्थदान् ।
वेदान्तान् परिशीलयन्ति रहसि स्वानन्दकन्दादरं
वन्दे तं जगदीश्वरं दयितया सानन्दमालिङ्गितम् ॥ १ ॥

कलितललितवंशीरन्ध्रसंधारणैक-
प्रवणनखयचञ्चत्पल्लवाभाङ्गुलीकम् ।
अभिनवजलजाक्षीवृन्दचन्द्राननश्री-
नियमितनयनान्तं गोपिकाकान्तमीडे ॥ २ ॥

मूले कल्पतरोरमन्दवलितग्रीवं गवालोकने
ब्रह्मेन्द्रादिलुठन्महार्घमुकुटस्पृष्टाङ्घ्रिपीठं वपुः ।
लीलालम्पटगोपबालकबलव्यग्राननं गोपिका-
सङ्केतस्वनसावधानहृदयं सञ्चिन्तये श्रीपतिम् ॥ ३ ॥

सकलसुरमहेशं तत्त्वविद्योपदेशं
करवलयितशेषं मोक्षलक्ष्मीनिवेशम् ।
धृतललितविशेषं कर्णभूषाऽहिशेषं
श्रितजटिलसुवेषं चिन्तये चिद्विशेषम् ॥ ४ ॥

पञ्चाशद्वर्णभेदैरपरिमिततरैरर्थजातैश्च युक्ता
नानालङ्काररम्या गणितगुणगणा साधुवृत्तैरुपेता ।
वाक्सृष्टिर्यत्प्रसादात्प्रसरति रसनोपान्तदेशे निमेषा-
न्नित्यं चित्ते ऽनुरक्ते वसतु मम सुखं भारती सा रसाढ्या ॥ ५ ॥

आसीदासीमभूमीपततिपरिदृढोद्दण्डचण्डप्रताप-
ज्वालामालाकरालाऽनलशमनमहावारिवाहप्रवाहः ।
विद्वद्दानाम्बुधारारुचिरपरिचयोत्पादिताऽनल्पधर्म-
स्वःशाखी ख्यातकीर्तिःप्रमुदितहृदयःकाशिराजाभिधान ६

यदीयनगरे परे वसति स स्वयं शङ्करः
समस्तजनपापजप्रबलतापसन्त्रासनः ।
तिरस्कृतभवोद्भवः प्रचुरमुक्तिमुक्ताफलः
प्रकृष्टविबुधालये सुरसरिद्वराऽलंकृते ॥ ७ ॥

तद्वंशजो धनुरिवाऽभवदेकवीर-
स्तत्पार्थिवप्रकरकेलिविलासशाली ।
यो लक्षदः क्षितितले किल मार्गणानां
राजा प्रतापवररुद्रमनोजकान्तिः ॥ ८ ॥

येन श्रीवैरिवीरोद्भवरुचिरनदी निर्मिता शक्तिघातै-
स्तत्पर्यस्तैश्च मस्तैर्धृतचिकुरलसद्दीर्घशैवालजाला ।
दृप्यन्मातङ्गकुम्भस्थलवहलगलच्चारुमुक्ताकलाप-
प्रोद्यत्सत्सैकता ऽन्त पततिगजघटाकोटिशुण्डादिनक्रा ॥९॥

अजनि तनो जनगीयमानकीर्ति-
र्मधुकरशाह इति प्रसिद्धनामा ।
जगति जनार्दनचिन्तनैकचित्त
स्फुरदुरुसूर्यसहस्रकोटिधामा ॥ १० ॥

यत्कीर्त्या धवलीकृते त्रिभुवने जैवातृकं रोहिणी
शम्भुं पर्वतकन्यका स च निजं कैलासमुर्वीधरम् ।
विष्णु. क्षीरनिधिं स चापि वसुधां स्वीय गजं सिन्धुजं
नाविन्दद्विबुधः सहस्रनयनो मुक्तां च विद्वद्वधू. ॥ ११ ॥

यस्योद्यत्करवालकालपुरुषः प्रत्यर्थिसीमन्तिनी-
चक्षुःकज्जलतस्करो ऽपि सुचिरं हस्ताऽवलम्बादभूत् ।
तत्तद्वीरसमस्तपार्थिवपृथुप्रख्यातकीर्तेस्तथा
कोशस्यापि च भाजनं कलिमलप्रध्वंसिधाराम्भसः ॥१२॥

तस्मादभूत् श्रीवरवीरसिंह-
देवाऽभिधानः प्रभुतानिधानम् ।
कलासु सर्वास्वपि पुण्यदासु
विशारदः शारदचन्द्रकान्तः ॥ १३ ॥

यस्य स्फारविपक्षपक्षसुभ्रधूर्वैधव्यदीक्षागुरुः
संग्रामाऽध्वरकर्ममर्मकुशलः प्रत्यर्थिपृथ्वीभुजाम् ।
प्राणाऽनर्घ्यमणेर्मया ऽपहरणा नाकारि किं तु प्रभो-
र्भ्रूभङ्गेन तवेति दिव्यमभजत्कोशं सुखड्ग. पुरः ॥ १४ ॥
प्रत्यर्थिक्षितिपालतिन्दुकवने यस्य प्रतापानले
सर्वं सन्दहति स्फुलिङ्गनिवहैर्दग्धो वियन्मण्डपः ।
पश्चाच्चोडुमिषाद्व्यधायि विधिना नीरन्ध्रताभाक् शनै-
स्तत्तत्कीर्तिपटाऽल्पखण्डनिचयैः स्वच्छोल्लसत्कान्तिभिः॥१५॥
ये कीर्तिं तुलयन्ति चन्द्रमहसा पीयूषसारेण वा
किं चैरावतदन्तिना समगहो यद्वीरसिंहप्रभोः ।
मूढास्ते नियतं यया ऽजनि तथा तेषां तपःसागरः
सौधौघाम्बुविलङ्घितात्रिभुवनस्वच्छोल्लसद्रूपया ॥ १६ ॥
सद्वृन्दावनकेलिकौतुकमनाः सद्वंशमेकं करे
कुर्वाणः कमलेक्षणः कुवलयापीडैकपीडाकरः ।
चञ्चत्साधुगतिप्रकर्षविलसत्पक्षिद्विजेन्द्राश्रयो
यो ऽभूत्केवलमेक एव कमलाकान्तः कलौ भूतले ॥ १७ ॥

अनेकसौवर्णतुलादिदात्रा
बुधव्रजप्रीतिविशेषभाजा ।
भास्वान् विवस्वानपि येन राज्ञा
तुलां ययौ नैव तुलांशभोक्ता ॥ १८ ॥

ये ये संग्रामभूमौ निशितशरवराघातमंत्यक्तजीवा-
स्ते सर्वे वैरिभूपाः सुरवरयुवतीकेलिमग्नाः सुखेन ।
स्वर्लोके संवसन्तीत्यनभिमतवचोजातकोपप्रकर्षो
यो वीरस्तत्र हन्तुं कृतसुकृतवलादभ्यगात्तान्सपत्नान् ॥१९॥
तदात्मजः साधुगुणैरुपेतः श्रीचन्द्रभानुः प्रथितः पृथिव्याम् ।
प्रवर्तते सर्वोपरि गीतकीर्तिः सदा मुदा ध्यानपरः परेशे ॥२०॥
यस्य श्रीक्षितिपालमौलिनृपतेर्दानाम्बुनोत्पादितः
स्व शाखीति विभाव्यते बुधगणैस्तत्त्वार्थसंदर्शिभिः ।
या केनापि कदापि किञ्चिदपि वा नालम्भि सा वाल्यतो
नो चेदुत्कटदानरीतिरभवत् कस्मादमुष्मिस्तरौ ॥ २१ ॥
तत्तद्याचकबिन्दुवृन्दमधुरोदञ्चन्मिलिन्दोल्लस-
द्यद्दानाम्बुनिषेकभासुरतरे दृष्टो दिगन्तान्तरे ।
दिङ्नागप्रकरस्त्रपातुरयं मध्येम्बर स्वान् करान्
कृत्वा यत्र ययौ स्थिरत्वमगमन्मित्रस्य भावं यथा ॥२२॥
यस्य श्रीक्षितिनायकस्य ललित दानाग्रमे यद्वचः
कास्ते सर्वहिरण्यमित्युदभवत्तत्कालमेवाऽलघु ।
ताप प्राप हिरण्यरेतसि जनिं जाड्यं हिरण्याचले
स्वेदाम्भोपि हिरण्यगर्भवपुषि स्त्रापाय मंत्रासत. ॥ २३ ॥
गाङ्गेयस्य शतानि यः प्रतिदिन लीलावशाद्भूपति-
र्भिक्षुभ्य प्रददाति वैरिशिरमा सग्रामभूमौ वलीन् ।
भूतेभ्य. किल य. प्रयच्छति कुतस्तस्यात्र साम्यं भजे-

द्राङ्गेयस्य बलेश्च दानमहिमा विख्यातकीर्तेरपि ॥ २४ ॥
यल्लोकाः कामसाम्यं नृपकुलतिलके चन्द्रभानौ वदन्ति
तद्रूपज्ञा न मन्ये वपुषि ननु यतो यच्छरेणाशु विद्धाः।
यस्तं सस्ताऽलकान्ताः प्रगलितवसनास्त्यक्तभूषाविशेषा
धावन्ति प्रेमबद्धाः सपदि सुरवरस्त्रैणसङ्घाः सरागाः ॥२५॥
यस्योद्यत्करवालकालभुजगे संग्रामदेशे मतिं
गन्तुं कुर्वति वीरवैरिवनितावेणीभुजङ्गीगणाः।
दुःखोद्रेकवशादशेषवनितामूर्द्धैकभूषाः समं
सस्नेहाः खलु मूर्च्छिता इव परं भूमौ पतन्ति द्रुतम् ॥ २६ ॥
भ्रमेण रहितः सदा न च कदापि मन्दादरः
समस्तविषयेऽपि यः किमपि नोपरक्तः कलौ।
अनेकतुरगाधिपः सकललोकतापापहः
कथं न खलु भानुतो भवति चन्द्रभानुः परः ॥ २७ ॥
यत्कीर्तिर्विमला समस्तजगति ख्याता जगन्निर्मलं
कर्तुं सन्नियमं चकार च तथा चन्द्राधिकं तत्क्षणात्।
मोघच्छ्यामकलाकलापमलिनं यद्वैरिवक्त्रं तथा
शक्ता नेत्यतिलज्जयैव नु गता पारं परं वारिधेः ॥ २८ ॥
विद्वद्भिः समुपाश्रिता मुनिगणव्रातैः पुराणैः पुरा
शाखाभिर्निगमद्रुमस्य रचिता विद्यातरिः सादरम्।
मग्नाप्यत्र दरिद्रताजलनिधौ सत्कर्णधाराधिक-
श्रीवीरोद्भवचन्द्रभानुविभुना येनाऽधुना तार्यते ॥ २९ ॥
व्यसनामग्नचित्तेन गौतमीतीरवासिना।
श्रीत्र्यम्बकतनूजेन पण्डिताऽनन्तशर्मणा ॥ ३० ॥
रसिकश्रुतिभूषा ऽस्ति भुवि या रसमञ्जरी।
व्यङ्ग्यार्थकौमुदी व्याख्या तन्यते ऽस्याः कुतूहलात् ॥३१॥

आदरादपि कुर्वन्तु दुर्जना न कथं चन ।
हेलया ऽपि च सन्तोत्र दृष्टिं कुर्वन्तु मत्कृतौ ॥ ३२ ॥
किं मे प्रार्थनया ऽथ वा यदि गुणः कश्चित्स्वसूक्तौ भवेद्
विद्वद्वृन्दमिदं तदा द्रुततरं तेनैव बद्धादरम् ।
नो चेद्दीनदयालु दैन्यवचनैस्तच्छ्रोष्यते केवलं
चित्त संमदमातनोति कृतिन. किं तावता स्वान्तरे ॥३३॥
सगुणापि हन्त विगुणा भवति खला स्याद्विचित्रवर्णा ऽपि ।
आखुमुखादिव शाटी पदपरिपाटी कवेः कापि ॥ ३४ ॥
सदोषमपि निर्दोषं भवत्यग्रे विपश्चित· ।
रामस्येवाऽर्जुनवपुः कवेश्च सरसं वचः ॥ ३५ ॥



# रसमञ्जरी ।

श्रीसरस्वत्यै नमः ।

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाऽऽशङ्कया ।
तल्पे किं च मृगत्वचा विरचिते निद्राति भागैर्निजै-
रन्तःप्रेमभराऽलसां प्रियतमामङ्गे दधानो हरः ॥ १ ॥

विशिष्टशिष्टकर्त्तव्यतापरिप्राप्तं मङ्गलमनुषङ्गतो व्याख्यातृश्रोतृमङ्गलाय निबध्नाति । आत्मीयमित्यादिना ।

यः निम्नोन्नतायां भुवि उच्चावचप्रदेशेषु पुरतः अग्रतः ।

## रसमञ्जरीप्रकाशः ।

श्रीगुरुभ्यो नमः ।

सामि नीलोत्पलश्यामं वपुर्यस्य विभाति च ।
यामिनीवृयितद्योतमानः सो ऽस्तु शिवाय नः ॥ १ ॥
नागेशभट्टनामा शिवभट्टसुधीसुतो मुदे विदुषाम् ।
रसमञ्जरीप्रकाशं रचयामि मितैर्वचोभिरर्थघनम् ॥ २ ॥

श्रमाशङ्कयेति सर्वत्र करणत्वेनान्वेति । आद्यपादे मृदुतरप्रियापादकमलस्य तथाविधप्रदेशे प्रथमपातेन सा तरोरेव न तरूणाम् । पुष्पमेव न तु फलं पुष्पाणि वा । एकपुष्पावचयकृतोपि श्रमो मा ऽस्त्विति भावेन प्रेमातिशयः । पुष्पावचयश्च तद्भूषणार्थं । तत्स्पृहणीये तस्यां ग्रहीतुं प्रवृत्तायां स्वयमेवाऽवकृष्य ददातीति भावः । तृतीये पादे कामिन्याः कोमलाङ्गतया ऽऽशङ्का । अन्तर्विद्यमानप्रेम्णा रसेनाऽऽस्वादेनाऽलसाम् । अनेन नायिकाया अप्यनुरागो दर्शितः । अन्त प्रेमरसालस इति पाठे ऽन्तः प्रेमरसालसो ऽप्येवं चकारेति प्रेमाऽतिशयध्वनिः ॥ १ ॥

स्यात्पुरः पुरतो ऽग्रत इत्यमरः । पुरसित्यव्ययस्य पुरस्त इति रूपं न तु पुरत इति । यच्च पिपर्तेर्घञर्थे कविधानमिति कप्रत्यये तदन्तात्तसिल् इति दुर्घटवृत्तिकृत्समाधान तदपि प्रकृतार्थाऽसिद्धिकृदिति 'इयं च ते ऽन्या पुरतो विडम्बने'त्यादिमहाकविप्रयोगाद्यथातथा ऽस्य गतिश्चिन्तनीया । आत्मीयमेव आत्मनो ऽयमात्मीयः । वृद्धाच्छ इति छः । स्वीयमेव अर्थाद्दक्षिणमेवेत्यर्थः । न तु वामम् । आत्मीयपदेन वल्लभत्वं द्योत्यते । चरण पादम् । एकवचनेनाऽतिवल्लभत्वे ऽप्युच्चावचप्रदेशेषु दानादधिक प्रेम प्रियाविषयकमिति व्यज्यते । श्रमाऽऽशङ्कया श्रमस्य खेदस्य आ ईषत् शङ्का वितर्कः तया । एवं च प्रियाश्रमे यत्संशयवशादेवमकरोत् किं पुनस्तत्क्रमनिर्णये इति भावः । प्राणप्रियाया इति शेषः । प्राणप्रियायाः श्रमाशङ्कया इति चाप्यग्रे ऽप्यन्वेति । दधाति निक्षिपति । प्राणप्रियायाश्चाऽतिमृदुलचरणसरोजस्य तथाविधप्रदेशेषु प्रथमविन्यासेन श्रमो मा भवत्विति धियेति भावः । किं च यः स्वीयेनैव करेण दक्षिणकरेणैव तरोः न तु तरूणां पुष्पं न तु फलादि तदप्येकं न बहूनि कर्षति गृह्णाति । एवं चैकपुष्पस्यावचयेप्येतस्याः श्रमो मा भवत्विति धिया तथा ऽकरोदिति प्रियाप्रेमाऽतिशयो द्योतते । किं च अन्यदपि मृगत्वचा एणाजिनेन विरचिते विशेषेण उच्चावचशून्यतया रचिते सज्जिते तल्पे शयनीये । तल्प च शयनीये स्यादिति विश्वः । निजैरेव दक्षिणैरित्यर्थ । भागै एकदेशै । एवं च सर्वं शयनीयमभिव्याप्य कोमलाङ्ग्याः कामिन्यास्तदेकदेशेपि यथा नाऽङ्गसम्बन्ध. किं तु स्वशरीरोपर्येव यथा ऽङ्गसम्बन्धस्तथा ऽकरोतीति भाव. । व्यङ्ग्यं पूर्ववदेवम् । निद्राति स्वपिति ।

एवं च स्वापेऽपि परिवर्तनाऽभावात्प्रेम्णा स्थिरत्वमावेद्यते । नन्वेतावता हरस्यैव प्रियाविषयकं प्रेम न तद्विषयं तस्या इत्यत आह अन्तःप्रेमभरालसामिति । अन्तः अभ्यन्तरे प्रेम अर्थाद्धरविषयकं, तेन अलसां तत्तद्व्यापाराऽयोग्याम् । अन्तःपदेन पुष्पाऽवचयादिकर्त्तव्यतारूपबाह्यप्रेमकार्याऽभावो द्योत्यते । एवं च प्रेम्णि परस्परनिरूपितत्वं ध्वन्यते । प्रियतमाम् अतिशयेन प्रिया इति प्रियतमा ताम् । अतिशयश्च प्रागुक्तरीत्या अनुसन्धेयः । यद्यपि हरस्य प्रियान्तराभावेनाऽवधारणफलकतमब्वैयर्थ्यं तथापि प्रियाशब्दस्य संबन्धिशब्दत्वेन येषां याः प्रियास्तासां मध्ये इयं प्रियतमेत्युक्ते तदितरदम्पत्यनुगतप्रियत्वाऽपेक्षयैतस्या असाधारणं प्रियत्वमिति न तद्वैयर्थ्यम् । अङ्गे शरीराऽर्द्धभागे । नपुंसकलिङ्गेन कठिनत्वाऽभावो व्यज्यते । एकवचनेन बहुकालमेकाङ्ग एव धारणेऽपि श्रमाऽज्ञानात् प्रियाविषयकप्रेमनिमग्नमानसत्वं हरस्य व्यज्यते । दधानः सन् वहन् । हेतुगर्भमिदं विशेषणम् । स हरः जयतीत्यस्याऽध्याहार । एवं च हरस्य सर्वोत्कृष्टताशालित्वप्रतिपादनेन स्वस्य सर्वान्तर्गतत्वेन तन्निरूपिताऽपकृष्टत्वप्रतीत्या मानसप्रणतिरूपं मङ्गलमावेदितं भवति ।

अत्र प्रियतमासाधारणस्य हेतोश्चरणत्रयपदार्थत्वेन काव्यलिङ्गमलङ्कारः । तदुक्तं "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृत"मिति । नायकश्चाऽयमनुकूलः । तल्लक्षणं तु सार्वकालिकपराङ्गनापराङ्मुखत्वे सति सर्वकालनिजाऽङ्गनाऽनुरक्तत्वम् । अत्र प्रथममवर्णादानात्संपत्फलकत्वम् । तदुक्तं भामहेन । "अवर्णात्सम्पत्तिर्भवती"ति । मगणपददानादपि तदेव फलं भवति । "मो भूमिस्त्रिगुरुः श्रियं ददाती"ति वृद्धवचनात् । इदं च फलं काव्यनायकस्य तत्कर्तुस्तत्पाठितुर्वा यथासम्भवं व्यस्तं समु-

विद्वत्कुलमनोभृङ्गरसव्यासङ्गहेतवे ।
एषा प्रकाश्यते श्रीमद्भानुना रसमञ्जरी ॥ २ ॥

ल्पितं वा ज्ञेयम् । यत्र तु नायकः प्राचीनो देवतादिर्वा स्वकल्पितो वा तत्र तत्कर्तुस्तत्पठितुर्वेति विवेकः । शार्दूलविक्रीडितं वृत्तम् ।

कर्णौ कुण्डलसङ्गतः करतलं चामीकरेणाऽन्वित
पादान्तो नवनूपुरेण कलितो हारौ प्रसूनोज्ज्वलौ ।
गुर्वानन्दयुतो गुरुर्यदि भवेत्तन्न्यूनविंशाक्षरं
नागाधीश्वरपिङ्गलेन भणितं शार्दूलविक्रीडितम् ॥
इति तल्लक्षणात् ॥ १ ॥

श्रोतृप्रवृत्तये प्रयोजनं दर्शयन् स्वकीर्त्यनुवृत्तये स्वनामग्रन्थनामनी प्रतिजानीते विद्वत्कुलेत्यादिना । विदुषां विपश्चितां न तु मूर्खाणाम् । तथा च तैरेतद्ग्रन्थाऽनादरेऽपि न क्षतिरिति भावः । कुल गणे, सजातीयगणे गोत्रे देहेऽपि कलितं कुलमिति विश्वः । तस्य यन्मनः । मन इत्येकवचनेन सर्वविद्वन्मनसामेकजातीयव्यसनशालित्वं द्योत्यते । तदेव भृङ्गः मधुलिट् । भृङ्गपदेन रसलम्पटत्वं व्यज्यते । तस्य यो रसस्तस्य शृङ्गारादेः पुष्परसस्य च व्यासङ्गः प्राप्तिः स एव हेतुस्तस्मै । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मिति वाचनिकी चतुर्थी । श्रीमद्भानुना श्रीः प्रतिभा कवित्वबीजभूतप्राग्भवीयसंस्कार इति यावत् । तद्वता भानुनाम्ना कविना । एषा बुद्धिस्था ।

विद्वदिति । रविणा विकाश्यमाना मञ्जरी यथा भृङ्गस्य रसास्वादाय भवति तथेयमपीत्यर्थः । ननु भानो प्रकाशकत्वं मञ्जरीप्रकाशकत्वस्य कविक्षुण्णत्वाऽभावाच्चिन्त्यमित्याहुः ॥ २ ॥

तत्र रसेषु शृङ्गारस्याऽभ्यर्हितत्वेन तदालम्बनविभावत्वेन नायिका तावन्निरूप्यते। सा च त्रिविधा स्वीया परकीया सामान्यवनिता चेति। तत्र स्वामिन्येवाऽनुरक्ता

एवं च समूलत्वं द्योत्यते। रसमञ्जरी रसः शृङ्गारादिस्तद्वती मञ्जरीव मञ्जरी। यद्यपि रसवत्त्वं सभ्यानामेव तथापि आयुर्घृतमितिवदुपचारः। प्रतिपाद्यप्रतिपादकभावसम्बन्धेन तद्वत्त्वमित्यपि केचित्। प्रकाश्यते स्फुटीक्रियते। अन्यापि शोभाशालिरविणा विकासिता रसवती मञ्जरी भृङ्गव्यासङ्गहेतुर्भवति। एवं च रसाऽवाप्तिः प्रयोजनमभिहितम्।

अत्र रसव्यासङ्गहेतोरुत्तरार्द्धपदार्थत्वेन काव्यलिङ्गमलङ्कारः। स च श्लेषच्छेकाऽनुप्रासाऽनुप्राणितः। वक्त्रं वृत्तम्।

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः
गुरु षष्ठं तु पादानां शेषेष्वनियमो मतः।
प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम्॥ इति लक्षणात्॥२॥

प्रकृतमाह तत्रेत्यादिना। तत्र रसमञ्जर्यां रसेषु शृङ्गारस्य शृङ्गं प्राधान्यमियर्त्तीति शृङ्गारस्तस्य। ऋ गतावित्यस्मा-

अभ्यर्हितत्वेनेति। पुरुषोत्तमाश्रयत्वात्कृष्णादैवत्याच्च। तदालम्बनेत्यस्य च पुरुषोत्तमाश्रयालम्बनविभावत्वेनेत्यर्थः। एतेन नायकस्यापि तत्त्वात् नायिकायाः प्रथमतो निरूपणे बीजं चिन्त्यमित्यपास्तम्। "पूर्वं रक्ता भवेन्नारी पुमान्पश्चात्तदिङ्गितै"रितिक्रमानुसारेण तस्याः प्रथमतो निरूपणमित्याहुः। तत्र स्वामिनीति। स्वामी चात्र परिणीतः। एवकारेण तदतिरिक्ताऽननुरक्तत्वं लभ्यते। अनुरक्तत्वञ्चाऽनुरागयोग्यतावच्छेदकधर्मवत्त्वम्। तेन मुग्धायां नाऽतिव्याप्तिः। वस्तुतो लज्जाभयप्रधानायास्तस्या अपि नास्त्येवाऽनुरागः किं तु तत्प्रधानत्वादेव संवेद्य इत्यन्यदेतत्। अनुरागपदेनात्र शृङ्गारस्था-

स्वीया। न च परिणीतायां परगामिन्यामतिव्याप्तिः। अत्र पतिव्रताया एव लक्ष्यत्वात्। तस्याश्च परगामितया परकीयात्वमपि समायाति। अस्याश्चेष्टा भर्तुः शुश्रूषा, शीलसंरक्षण,मार्जवं, क्षमा चेति। यथा।

त्कर्मण्यण् अचो ञ्णितीति वृद्धिः। अभ्यर्हितत्वेन प्राधान्येन। अभ्यर्हितत्वेनेत्यत्र 'शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते'ति न्यायात् पुरुषोत्तमाश्रयत्वादिति हेतुपूरणम्। एवं च तच्छब्देन विशिष्टपरामर्शात् पुरुषोत्तमाश्रयशृङ्गाराऽऽलम्बनविभावत्वेन नायिका इति शेषः। तावत् नायकनिरूपणात्प्राक्। नायिका नयति वशीकरोति सा नायिका निरूप्यते निरूपणविषयीक्रियते। तद्विषयकं निरूपणं क्रियते इत्यर्थः। एवं च शृङ्गाराऽऽलम्बनविभावत्वस्य नायिकानायकयोस्तुल्यत्वे किमिति प्रथमतो न नायकनिरूपणमिति दूषणमल्पकं वेदितव्यम्। ननु निरूपणीयनायिकानामनेकत्वात्कथमेकवचनमिति चेन्न। नायिकात्वस्य शृङ्गारालम्बनत्वरूपोपाधेः सर्वाऽनुगतत्वेन

यिभुना वा निर्गृह्यते। तेन मात्राद्यनुरागवत्त्यामेवकारो नास्तीति पराम्नम्। एवकारव्यावर्त्यमाह। न चेति। उभयाऽनुरागवत्त्यामतिव्याप्ति न त्विष्टापत्तिस्तत्राह पतिव्रताया एव लक्ष्यत्वात् इति। पत्यनुरागवत्यामेवेत्यर्थः। किञ्चाऽस्याः स्वीयात्वेन परकीयालक्षणस्य तत्राऽतिव्याप्तिरित्याह तस्याश्चेति। एवञ्च स्वीयालक्षणं एवकारं दत्वा तस्याः परकीयात्वमेव वक्तुं युक्तमिति भावः। वैपरीत्ये तु सिद्धान्तविरोध इति भावः। वस्तुतो ऽव्याप्तिरिति पाठस्तादृश्याः स्वीयात्वं मन्यमानस्य शङ्केति ध्येयम्। शीलं सद्वृत्तम्। आर्जवमकुटिलता।

तद्वती निरूप्यतइत्यर्थान्न का चित्क्षतिः । ऋजवस्तु आलम्बनविभावत्वेनात्राऽऽश्रयमात्रमुच्यते । तथा च नायकविषयकरत्याश्रयत्वं नायिकायां यथा तथा नायिकाविषयकरत्याश्रयत्वं नायकेपीति तुल्यत्वेपि यथा 'पूर्वं रक्ता भवेन्नारी पुमान् पश्चात्तदिङ्गितै'रित्युक्त्या पूर्वं नायिकाऽनुरागो निरूप्यते तथा नायिका प्रथमतो निरूप्यते इति सकलकविसंप्रदायाऽनुरोधादेवमभिहितमित्याहुः । सा चेति चस्त्वर्थे । त्रिधा त्रिविधोपाधिमती । एतदेव विवृणोति । स्वकीयेत्यादिना । तत्र प्रथमोद्दिष्टत्वात् स्वीयां लक्षयति तत्रेत्यादि । तत्र तास्वित्यर्थः । पत्यतिरक्ताऽननुरक्तत्वे सति पत्यनुरक्तत्वं स्वीयात्वम् । तद्वती स्वीयेत्यर्थः । मुग्धायां पत्यनुरागाऽयोग्यत्वादज्ञानादिप्रतिबन्धकत्वाद्वा नाऽव्याप्तिः । ननु तथापि मात्राद्यनुरागवत्यां तस्यां सत्यन्ताऽभावादव्याप्तिरिति चेन्न । अनुरागपदेन रतेरत्र विवक्षितत्वात् । सत्यम् । तद्व्यावर्त्यमाह । न चेत्यादि । परिणीतायां पत्यनुरागवत्यां परगामिन्यां पराऽनुरागवत्यां पतितदतिरिक्ताऽनुरागवत्यामित्यर्थः । अव्याप्तिः । व्यापनं व्याप्तिः । लक्षणस्य लक्ष्यमात्रसत्त्वम् । तदभावः अव्याप्तिः । लक्ष्याऽतिरिक्तसत्त्वम् । न चेति स्वरविशेषसूचितया काक्वा लक्षणसत्त्वमस्तीत्यर्थः । नन्वेतस्या लक्ष्यत्वान्न लक्षणसत्त्वं विरोधीत्यत आह । अत्रेत्यादि । अत्र अस्मिन् रसिकशास्त्रे । पतिव्रताया एव लक्ष्यत्वात् स्वीयात्वेनेति शेषः । तस्मात्सत्यन्तमावश्यकमिति भावः । ननु तर्ह्युभयाऽनुरागवत्याः कुत्राऽन्तर्भाव इति आह । तस्याश्चेति । चस्त्वर्थे । उभयाऽनुरागवत्यामित्यर्थः । परगामितया पराऽनुरागवत्त्वेन । अपिरवधारणे । परकीयात्वमेवेत्यर्थः । उभयाऽनुरागवत्याः स्वीयात्व मन्वानः शङ्कते न चेत्यादि । अव्याप्तिः । सत्यन्ताऽभावादित्यर्थः । उत्तरमाह अत्रेत्यादि । त-

गताऽऽगतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधरएव विश्राम्यति ।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदा चिदपि चेत्तदा मनसि केवलं मज्जति ॥ ३ ॥

स्याः कुत्राऽन्तर्भाव इत्यत आह तस्याश्चेत्यादीति । ऋजवस्तु उक्तलक्षणस्य प्रत्यक्षाऽविषयत्वात्तज्ज्ञानाय तस्याश्चेष्टामाह । अस्याश्चेष्टेत्यादि । भर्तुः विधिवत्पाणिग्रहणकर्तुः । शुश्रूषा । परिचर्या । मुग्धादिषु पतिशुश्रूषायोग्यत्वादज्ञानादिमतिवद्ध-त्वाद्वैतच्चेष्टासङ्गतिः । शीलस्य सद्वृत्तस्य । शील स्वभावे स-द्वृत्ते इति विश्वः । संरक्षणमनन्यथाकरणम् । आर्जवम् । अ-कौटिल्यम् । क्षमा शान्तिः । ननु लक्षणज्ञानस्य किं फलमिति चेदितरव्यावृत्त्यादिकमेवेति गृहाण ।

चेष्टामेवोदाहरणमुखेनाह । यथेत्यादि । कुलनतभ्रुवां कुलस्य अन्वयस्य । सन्ततिर्गोत्रजननकुलान्यभिजनाऽन्वयावित्यमरः । नते नम्रे मदनचापवदिति भावः । भ्रुवौ ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियामित्यमरः । यासां ताः कुलनतभ्रुवः तासाम् । यद्वा कुले स्वजने नतभ्रुवः नम्रदृष्टयः किं पुनरन्यत्रेति भावः । नयनयो-

गतागतेति । प्रेरणाकुञ्चनविषयककौतुकम् । अपाङ्गो नेत्रप्रान्तः । म-न्मथकुतूहलेन कदा चित्कदा चिद्व्यज्यते । तदपि नायकमनोविका-रपर्यन्तमेवेति भावः । अधरएवेति । तमुल्लङ्घ्य बहिर्न प्रसरति । अनेन च शीलसंरक्षणम् । श्रुतेरेव न श्रवणयोः । अतिथित्वेन का-दाचित्कत्वमतिप्रियत्वं वा । यद्वा अतिथेर्मानाऽपमानयोः समानत्वं स्वविषयकार्याऽनुष्ठानाऽननुष्ठानयोः समत्वेन समानत्वं व्यज्यते । इति नास्त्येव सः । यदि भवेत्तदा क्रमः आरम्भ एव न परिपोषः तदा मनस्येव न बहिर्व्यञ्जिका चेष्टेति ऋजुत्वं ध्वन्यते ॥ ३ ॥

र्नेत्रयोः। लोचनं नयनं नेत्रमित्यमरः। गताऽऽगतकुतूहलम्। गतं प्रेरणम्। आगतमाकुञ्चनम्। तद्विषयकं यत्कुतूहलं, कुतुकं तु कुतूहलमित्यमरः। कुतूहल कदा चिदेव भवति न सर्वदेति गताऽऽगतयोः कादाचित्कत्वं, तत्रापि तदप्येकं न बहूनीति व्यासङ्गान्तरोत्पत्तिभीतिद्वारा भर्तुः शुश्रूषा ऽभिव्यज्यते। अपाङ्गावधिः। अपाङ्गौ नेत्रप्रान्तौ। अपाङ्गौ नेत्रयोः प्रान्तौ इत्यमरः। तदवधि तत्परिच्छिन्नं तत्परिच्छेदे बिले ऽवधिरित्यमरः। यद्वा। अपगतान्यङ्गानि यस्येत्यपाङ्गः। अनङ्ग इत्यर्थः। तदवधि तावत्पर्यन्तम्। एवं च नयनयोः कदा चिदेव गतागतं तदपि नायकमनोविकारपर्यन्तमिति भावः। कुलनतभ्रुवामित्यग्रेप्यन्वेति। स्मित न तु हसितम्। तदप्यधरे एवमधरेष्वेव न गण्डादिषु विश्राम्यति विश्रान्तिं याति। न तमुल्लङ्घ्य गच्छतीत्यर्थः। अन्योपि यो यत्र विश्रान्तिं प्राप्नोति स तद्विहायाऽन्यत्र न गच्छतीति। एवं च न कदाप्यूर्ध्वास्यहास्यता ऽस्या इति शीलसंरक्षणमभिव्यज्यते। वचः। उच्यते इति वचः। वक्तुं योग्यमित्यर्थः। तदप्येकं प्रियतमश्रुतेः। अतिशयेन प्रियः प्रियतमः। एवं चाऽतिशयप्रेमवत्तया संलापयोग्यत्वं द्योत्यते। तस्य श्रुतेः श्रवणयोः। एवं च यत्र वक्तुं युक्तस्याप्येकस्यापि वचसः संलापयोग्यप्रियतमाऽपरश्रुतिविषयता न भवति तत्र का वार्त्ता ऽन्यश्रुतिविषयतायामिति भावः। अतिथिरेव आवेशक एव स्यादावेशक आगन्तुरतिथिर्ना गृहागते इत्यमरः। एवं चातिथिर्यथाक्षणमेव तिष्ठन् मानाऽपमानयोः समस्तथा स्वोदीरितवचनार्थाऽनुष्ठानाऽननुष्ठानाऽन्यतरकारिण्यपि प्रियतमे समानप्रेमशालित्वमिति क्षमावत्त्वं द्योत्यते। तथा कदा चिदपि केनापि कालविशेषेण चेत् यदि कोपक्रमः कोपस्य अमर्षस्य क्रम आरम्भः। एवं च न कदापि कोपपरिपोष इति ऋजुत्वं ध्व-

स्वीया तु त्रिविधा । मुग्धा मध्या प्रगल्भा चेति । तत्राऽङ्कुरितयौवना मुग्धा । सा च ज्ञातयौवना ऽज्ञातयौवना च । सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढा । सैव क्रमशः सप्रश्रया विश्रब्धनवोढा । अस्याश्चेष्टा

न्यते । तदा केवल कृत्स्नं केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोरित्यमरः । मनसि हृदये मज्जति । एवं च मनस्यतिगाम्भीर्यमभिव्यज्यते । स्वभावोक्तिरलङ्कारः । लक्षणं च "स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णन"मिति । पृथ्वी वृत्तम् ।

पयोधरयुता स्फुरत्कनकयुग्मताटङ्किनी
सुवर्णरुचिकङ्कणा ललितभाववन्नूपुरा ।
सुगन्धिरुचिरा लसच्छ्रवणरूपवत्कुण्डला
भुजङ्गपतिवर्णिता हरति हन्त पृथ्वी मनः ॥

इति तल्लक्षणात् ॥ ३ ॥

स्वीयाविभागमाह स्वीया तु त्रिविधेति । त्रैविध्यमुपपादयति । मुग्धेत्यादि । मुग्धां लक्षयति । तत्रेत्यादि । तत्र तास्वित्यर्थः । अङ्कुरा सञ्जाता यस्येत्यङ्कुरितं तदस्य सञ्जातमिति तारकादित्वादितच् । एवम्भूतं यौवनं तारुण्यं यस्या इति । अङ्कुरादेर्वृक्षधर्मत्वात् यौवने बाधात् प्रत्यग्रत्वं लक्ष्यते

तथाङ्कुरितेति । अङ्कुरितत्वेन प्रत्यग्रत्वं लक्ष्यते । पत्यतिरिक्ताऽननुरागवत्त्वे सति प्रत्यग्रयौवनात्वं मुग्धात्वम् । सत्यन्तेनाऽङ्कुरितयौवनसामान्यवनितायां नाऽतिव्याप्तिः । सा चेति । न ज्ञातं यौवनं यया इति यस्या इति वा विग्रहः । एवमपरत्र । यथेत्येवेत्यपरे । ज्ञातयौवनत्वादिविशेषितमुग्धालक्षणमेव तयोर्लक्षणं बोध्यम् । सैवेति । ज्ञाताऽज्ञातयौवना मुग्धैव । क्रमशः । पूर्वं लज्जैव ततो नायकदर्शनस्पर्शनभयमिति भावः । पराधीनेति । लज्जाभयाभ्यां पराधीना तत्प्रधाना । न तु

क्रियाह्रिया मनोहरा कोपे मार्दवं नवविभूषणे समीहा च ।

तेन च शोभाऽतिशयो व्यज्यते। एवं च पतिमात्राऽनुरागवत्त्वे सति प्रत्यग्रयौवनवत्त्वमिति फलितं मुग्धालक्षणम् । तेन सामान्यवनिताप्रतिपालितासु अङ्कुरितयौवनासु नाऽतिव्याप्तिः । मुग्धामपि विभजते । सा चेत्यादि । अज्ञातमनवगत यौवनं यया यस्या इति वा। एवमपरत्रेति प्राञ्चः। वयं तु न ज्ञातं यौवनं यस्याः, ज्ञातं यौवनं यया इत्येवार्थ इति ब्रूमः। स्वयम्भूरित्यत्र तस्या यथा यौवनं ज्ञातं तथा वक्ष्यामः। अत्र चाऽज्ञायमानत्वज्ञायमानत्वविशेषितं मुग्धालक्षणमेव द्वयोर्लक्षणं वेदितव्यम् । तामेव पुनर्व्यवहारेण विशिनष्टि सैवेत्यादि । सैव अज्ञातयौवना ज्ञातयौवना मुग्धैव । क्रमशः समयविशेषक्रमादित्यर्थः। लज्जा अधार्ष्ट्यम्। भयं रतेरपरिचयेन शङ्का। ताभ्यां पराधीना तत्प्रधाना रतिः सम्भोगो यस्याः सा । नवोढा नवम् अभिनवं यथा स्यात्तथा ऊढा भर्त्रा सम्भोगादिव्यापारं प्रापिता। न च क्रमश इत्यनेन विशेष्यविशेषणयोर्यथासङ्ख्यत्वेनाऽज्ञातयौवनालज्जापराधीनरतिः, ज्ञातयौवना भयपराधीनरतिरिति शङ्क्यम् । प्रत्येकमुभयव्यापारदर्शनात् । अत्र च लज्जाभयप्रधानरतिकत्वाऽज्ञायमानज्ञायमानयौवनत्वाऽन्यतरत्वविशेषितं मुग्धालक्षणमेव नवोढालक्षणं बोध्यम्। वस्तुतस्तु तन्मात्रधर्मवत्त्वमेव तल्लक्षणमिह बोध्यम् । तामेव पुनर्व्यवहारान्तरेण विशिनष्टि सैवेत्यादि । सैव लज्जाभयपराधीनरत्य-

तद्विरोधेन स्वकार्यक्षमेति भावः । एवञ्च लज्जाभयप्रधानरतिकत्वे सति ज्ञायमानत्वादिघटितं मुग्धालक्षणमस्या लक्षणम् । सैव नवोढैव। प्रश्रयो विश्वासः। क्रियेति। सलज्जव्यापारकरणान्मनोवशकर्त्री। क्रियाविषयलज्जयेत्यक्षरार्थः। मार्दवमल्पाऽपनेयता।

मुग्धा यथा।

आज्ञप्तं किल कामदेवधरणीपालेन काले शुभे
वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः।

ज्ञातयौवना ऽज्ञातयौवना मुग्धा नवोढैव क्रमेण समयविशेषेण। समश्रया प्रश्रयो विनयः गात्राकुञ्चनमिति यावत्। तत्सहिता। यद्वा किञ्चिद्विश्वासं प्राप्ता विश्रब्धनवोढेत्युच्यते। ननु मुग्धालक्षणं कथं ज्ञातव्यमित्यत आह अस्याश्चेष्टेत्यादि। क्रियाह्रिया मनोहरा। क्रिया व्यापारस्तद्विषयिकया ह्रिया लज्जया मनो हरति सा। सलज्जव्यापारवत्या युक्तमेव वशीकरणम्। कोपे क्रोधे मार्दवम् अल्पाऽपनेयता। नवविभूषणे समीहा नूतनाऽऽभरणे समीहा जिघृक्षा।

मुग्धोदाहरणमाह आज्ञप्तमिति। का चित् कां चित् प्रत्याह कामदेवधरणीपालेन दीव्यतीति देवो विजिगीषारसिको यः कामो मदनः स एव धरणीपालो महीपालस्तेन। यद्यपि देवशब्दस्योपसर्जनपूर्वनिपातः प्राप्तस्तथापि विजिगीषायाः प्राधान्यविवक्षणान्न पूर्वनिपातः। एवं धरणीपालशब्देऽपि। कामपदेन कमनीयरूपताशालिनः कामिनीतनुभूमावेव वसतिरुचितेति ध्वन्यते। देवपदेन विजिगीषोर्जयभूमिकापरिग्रहस्याऽऽवश्यकत्वेन तथाविधाऽऽज्ञाकरणस्यौचिती व्यज्यते। धरणीपालपदेनाऽनुल्लङ्घनीयाज्ञत्वमावेद्यते। तृतीयया दूताद्द्वारकत्वकृताऽऽज्ञावशाद् वास्तुविधानरूपे कार्ये शीघ्रविधेयत्वं, तारुण्येनाऽतिश-

आज्ञप्तमिति। मदनेन राज्ञा एणीदृशस्तनौ वस्तुमाज्ञप्तं तारुण्यं वास्तु विधास्यतीति हंहो दृष्ट्यादिभिस्तत्तदामन्त्र्यते इत्यन्वयः। अत्र राजपदेनाऽनुलङ्घनीयाज्ञत्वम्, देवत्वेन जेतृता, कामत्वेन कामिनीतनुभूमाववस्थानयोग्यता च ध्वन्यते। तनौ कृशाऽभिन्ने शरीरे इत्यर्थः।

दृष्ट्या खञ्जनचातुरी मुखरुचा सौधाधरी माधुरी
वाचा किञ्च सुधासमुद्रलहरीलावण्यमामन्त्र्यते ॥ ४ ॥

यितप्रेमास्पदत्वं द्योत्यते । एणीदृशो मृगलोचनायाः । तनौ शरीरे । तनुपदेन सङ्कीर्णत्वप्रतिपादनद्वारा अन्येषां दुर्गमभूमित्वं, तेन चाऽऽवश्यकवसतियोग्यत्वं ज्ञाप्यते । शुभे कल्याणकारिणि काले समये वस्तुं वासं कर्त्तुम् आज्ञप्तम् । अमात्यभूते त्वयि कामिनीतनौ स्थितवति मया ऽपि तत्राऽऽगन्तव्यमचिरादेव । किं च तत्राऽधिवसतिं विधाय सकलजगज्जयो ऽस्मद्धस्त एवेत्यपि बोधितम् । अन्योपि राजा साऽमात्यो दुर्गाद्याश्रित्यैतरजयं करोतीति लोके प्रसिद्धम् । तारुण्यं यौवनम् । किल निश्चयेन । वास्तुविधिं सुखविशेषशालिचिरकालाऽवस्थितिफलकवास्तुदेवतापूजनविधिम् । वास्तुविधिमिति द्वितीयानिर्देशादीप्सिततमत्वप्रतिपादनेनाऽवश्यकर्तव्यत्वमावेद्यते तेन च सुतनुतनुरमणीयत्वम् । विधास्यति करिष्यतीति हेतोः । दृष्ट्या खञ्जनचातुरी खञ्जरीटस्य चातुरी वैदग्ध्री । चतुरशब्दात् ष्यञि तदन्तात् पिद्गौरादिभ्यश्चेति ङीपि यस्येति चेत्यकारलोपे हलस्तद्धितस्येति यकारलोपे रूपम् । यद्यप्येणीदृश इत्यनेनैव

कृशत्वेनाऽन्येषां दुर्गमत्वम् । खञ्जनचातुरी नीलकटाक्षविक्षेपरीतिमत्त्वम् । यद्वा यथा स निधिमद्देशयोगशाली तथा गुणवदेकान्तविषयशालित्वम् । एतेनैणीदृक्पदेनैव दैर्घ्यचापल्ययोर्लाभादिदं गतार्थमित्यपास्तम् । यद्वा खञ्जरीटस्य समयविशेषसञ्चारवत्कादाचित्कत्वेन सलज्जव्यापारमनोहरत्वम् । सौधाधरी ऐन्द्रची । तेन सर्वदा प्रसन्नतया कोपाऽभाववत्त्वं कठोरत्वाऽभावेनाऽल्पापनेयता वा सुधेति जीवनदातृत्वम्, समुद्रपदेन समर्यादत्वम्, लहरीपदेन प्रतिक्षणविलक्षणरसवत्त्वम्, अत्र लहरीपदेन नवनवसमीहा व्यज्यते इत्याहुः ॥ ४ ॥

दैर्घ्यचपलत्वयोः प्रतीत्या गतार्थमेतत् तथापि नीलकटाक्षवि-क्षेपरीतिमत्त्वम् । अथ वा यथा खञ्जरीटस्य समयविशेषे स-ञ्चारस्तथा कटाक्षविक्षेपणम् । अथ वा यथा तस्य सूक्ष्मविष-यदूरदर्शित्वं तथा ऽतिसूक्ष्मदर्शित्वम् । अथ वा यथा त-स्याऽवश्यं निधिमदेकप्रदेशयोगशालित्वं तथा गुणविशेषवदे-कान्तविषयप्रेमशालित्वं द्योत्यते इति न तेन गतार्थमेतत् । यद्वा ऽत्र एणीदृक्पदं स्वपर्यायमृगदृक्पदोपलक्षकम् । एवं च मृ-ग्यते गवेष्यते न त्वितस्ततः स्वयं सञ्चरति तद्वृक्समा दृक् यस्या इत्यभिधानात् । क्रियाह्रिया मनोहरत्वमावेद्यते । वस्तु-तस्तु एतीत्येणः तस्येयमिति यातायातवत्सम्बुद्ध्युत्कीर्तनेन स्वतस्तदभावेन तदेवाऽऽवेद्यतइति न तच्छङ्कापि । किं च मुख-रुचा वदनदीप्त्या । रुक्पदेन प्रियतमस्वान्ताऽन्तर्वर्तिक्लेशतमसो निरासकत्वं व्यज्यते । सौधाधरी सुष्ठु शोभनो रसो धीयते यस्यां सा सुधा तस्या धरः सुधाधरः तस्येयं सौधाधरी । त-स्येदमित्यणि टिड्ढाणञिति ङीप् । सुधाधरपदेन समीचीनग्रा-हकत्व तेन च न कदापि कोपरूपमालिन्यवत्त्वमिति द्योत्यते । यद्वा सुधामप्यधरयति तिरस्करोति ततोप्यधिकरसवत्तया रसाऽपकर्षककठोरकोपाऽनङ्गीकारप्रदर्शनमुखेन कोपे ऽल्पापने-यत्वमाविष्क्रियते । माधुरी मधुरिमा । चातुरीत्वव साधना । किं च वाचा वक्तुं युक्ता वाक् तया वाण्या । एवं च वाचि युक्तत्वरूपभूषणत्वेपि सुधासमुद्रलहरीलावण्यस्पृहावत्त्वात् न-वविभूषणप्रमीहा ऽभिव्यज्यते । सुधासमुद्रलहरीलावण्यं सु-धायाः पीयूषस्य समुद्रः सागरः तस्य लहर्यः तासाम् । ला-वण्यं सौन्दर्यम् । सुधापदेन जीवनदाननिपुणत्वं, समुद्रपदेन समर्यादत्व, लहरीपदेन प्रतिक्षणविलक्षणरसवत्त्वं च ध्वन्यते ।

अज्ञातयौवना यथा ।

नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।

चातुरीमाधुरीलावण्यपदैः चातुर्यमाधुर्यलावण्यानां मनुष्यद्राक्षादिधर्मत्वात् खञ्जनचन्द्रलहरीषु बाधात्स्वापतितमनस्कत्वाऽऽल्हादकत्वोज्ज्वलत्वानि लक्ष्यन्ते । तैश्चाऽलौकिकचमत्कारकारित्वचर्वणविषयत्वसदन्तस्मितज्योत्स्नावत्त्वानि व्यज्यन्ते । तैश्चाऽतिदुर्लभत्वाऽवश्यस्पृहणीयत्वप्रियतमहृदयाऽऽधितमोनिरासकत्वानि द्योत्यन्ते । दृष्टिमुखरुक्चातुरीमाधुरीति च स्त्रीलिङ्गनिर्देशात् स्त्रीणामेव स्त्रीणामाह्वानौचित्यं व्यनक्ति । वाचेति स्त्रीलिङ्गनिर्देशात् लावण्यमिति नपुंसकलिङ्गनिर्देशात् स्त्रियः षण्ढाऽऽकारणौचिती द्योत्यते । लावण्यमिति नपुंसकलिङ्गेन राजसदने सौविदल्लसत्त्वौचित्यं प्रदर्श्यते । तृतीयानिर्देशेन परस्परनिरपेक्षतया चातुर्याद्याह्वानकारित्वेन मदनमहीपतिसेवाऽतिशयो दृष्ट्यादीनामावेद्यते । आमन्त्र्यते । इदं च त्रिष्वप्यन्वेति । मदनमहीपतेः आज्ञया अमात्येन यौवनेन कामिनीतनौ समागतम् अतो भवद्भिरपि तत्राऽऽगन्तव्यमित्याकार्यतइत्यर्थः । दृष्ट्यादीनामप्रेरितत्वेपि खञ्जनचातुर्याद्याकारणेन मदनमहीपतिसेवाप्रावीण्यमावेद्यते । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तूक्तम् ॥ ४ ॥

एवं मुग्धां वयःसन्धिरूपेणोदाहृत्य विशिष्टामुदाहरति । अज्ञातयौवनेत्यादि ।

नीरात्तीरमिति । तटमुप तटसमीपं प्राप्ता न तु तटम् । तेनाऽऽकस्मिकतथाविधशङ्काकवलितहृदयतया आर्द्रवसनत्यागशाटीपरिधा-

नीरादिति । नीरात् नयति तन्नीरं तस्मादुदकादित्यर्थः । तथा चाऽऽकस्मिकनितम्बगौरवादागन्तुमशक्तापि तल्लहरीभिरेवाऽऽनीतेति भावः । तीरं तटम् । ईप्सिततमत्वबोधिकया द्वितीयया सलिलविहारसञ्जातनयनकमलशैवालसङ्गभ्रमशरीरसादवत्तया जले ऽतिद्वेषवत्ता द्योत्यते । उपागता उप समीपमागता न तु तटं प्राप्ता । एवं चाऽऽकालिकतथाविधशङ्काकवलितहृदया आर्द्रवसनपरित्यागतटस्थशाटीपरिधानादिकर्तव्यताज्ञानशून्या जातेति ध्वन्यते । शशिमुखी शशो ऽस्यास्तीति शशी तत्तुल्यमुखी । एवं च तथाविधशङ्कासञ्जातविलक्षणशोभाशालित्वं व्यज्यते । नायिका श्रोत्रे कर्णे किमिदमुत्पलं कुवलयं न तु कुवलये । एवं च नयनयोर्विशालताऽतिशयो व्यज्यते । लग्नं संबद्धम् । एवं च जलविहारवशात्संबन्धमापन्नं न तु बुद्धिपुरःसरं स्थापितमिति भावः । एवं चैतज्ज्ञानाय करन्यसनमुचितमेवेति गम्यते । इति ज्ञातुमनवगन्तु स्फुरन्नेत्रयोः श्रवणयोः सीम्नि मर्यादायाम् । एकवचनेन सीम्नोः समानत्वं सप्तम्या चाऽधिकरणप्रतिपादनद्वारा नेत्रस्फुरणधर्मत्वेन वितर्को व्यज्यते । करं न्यस्यति व्यापारयति । एवं च श्रोत्रे इत्यस्य नायिकासंशयकोट्यन्तर्गतत्वेन श्रवणयोरित्यस्य च कविवाक्याऽन्तर्गतत्वेन न पुनरुक्तिशङ्केति भाव्यस्तत्र । वैयधिकरण्यापत्तेः । वयं तु नीरात्तीरमुपागता । एवं चाऽनतंसयोग्योत्पलप्राप्त्यौचित्यं व्यज्यते । श्रोत्रे स्फुरत् शोभमानम् । एवं च श्रोत्रसीमासंबन्धयोग्यत्वं ध्वन्यते । तेन च संशयौचित्यम् । इदमुत्पलम् । एकवचनं क्षणक्षणविलक्षणशोभोत्कर्षाऽऽधाननिदानपर्यायन्यासौचितीं व्यनक्ति । श्रवणयोः नेत्रयोः सीम्नि किं लग्नमिति ज्ञातुं करं

शैवालाऽङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्तास्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥ ५ ॥

न्यस्यति। अर्थात्सीम्नीत्येकत्वमविवक्षितम्। करमित्येकवचनेनैककरस्यैवोभयत्र द्रुततरव्यापारकरणात्संभ्रमाऽतिशयो व्यज्यते इति ब्रूमः। वस्तुतस्तु संभ्रमाऽतिशयपोषकतया वैयधिकरण्यं न दोषाय। यत्तु स्फुरन्नेत्रयोः श्रवणयोः सीम्नि किम् उत्पलं लग्नम् इति ज्ञातुं श्रोत्रे करं न्यस्यतीत्याह। तन्न। ज्ञातयौवनत्वापत्तेः। किं च शैवालं जलनीली। जलनीली तु शैवालमित्यमरः। तस्याङ्कुरः तत्संशयेन। समानगुणत्वादिति भावः। अङ्कुरपदं सौन्दर्याऽतिशयमेकवचनं चाऽतिसूक्ष्मत्वं व्यनक्ति। रोमावलीं रोमोद्गमश्रेणीं प्रोञ्छति अवचिनोति। उञ्छाऽवचयेन स्पृशतीत्यर्थः। अर्थादपरेण करेण। किं च अविदितश्रोणीभरा अविज्ञातनितम्बगौरवा। जलविहारेणापि

नज्ञानशून्यता व्यज्यते। श्रोत्रे किमुत्पलं लग्नमिति ज्ञातुं स्फुरन्नेत्रयोः सीम्नि करं न्यस्यतीत्यन्वय इति केचित। तन्न। अन्यत्र लग्नत्वशङ्का अन्यत्र करस्पर्श इति वैयधिकरण्यापत्तेः। तस्मात् श्रोत्रे स्फुरत् शोभमानम्। अनेन श्रोत्रसीमासम्बन्धयोग्यतया संशयौचित्यम्। इदमुत्पलं श्रवणयोः नेत्रसीम्नि लग्नं जलक्रीडावशात्संबन्धमापन्नं किमिति ज्ञातुमित्यन्वयः। करमित्येकवचनेनैककरस्यैव तथा व्यापारेण सम्भ्रमाऽतिशयः। पूर्वमते वैयधिकरण्यमप्येतत्पोषायैवेत्यप्याहुः। केचित्तु श्रोत्रे विद्यमानं स्फुरन्नेत्रयोः सीम्नि किं लग्नमिति श्रवणयोः करं न्यस्यतीत्याहु। इयञ्च शङ्का जले प्रतिबिम्बं दृष्ट्वा जातेति बोध्यम। प्रोञ्छतीति। अर्थादपरेण करेणेति बोध्यम्। मुहुरिति सवर्त्राऽन्वेति। सख्या उत्तरे दत्तेपि मुग्धात्वादेव पुनः पुनः प्रश्नः ॥ ५ ॥

ज्ञातयौवना यथा ।

स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधरः ।

तत्संभवादिति भावः । सखीं वयस्याम् । श्रान्ता ऽस्मि श्रमं गतास्मि । मुहुः वारं वारम् । तारुण्याऽज्ञानाद्वयस्यया इमां प्रत्युत्तरे दत्तेपि पुनः प्रश्नात्संशयाऽतिशयो द्योत्यते । इदं च प्रागल्भ्येति । पृच्छति जिज्ञासापूर्वं वक्तीत्यर्थः । न्यस्यति प्रोञ्छति पृच्छतीति लटा न्यसनप्रोञ्छनप्रश्नानां वर्त्तमानत्वबोधनान्नयनविशालता, रोमोद्गमनितम्बगौरवाऽज्ञानादज्ञातयौवनात्वं बोध्यते । यद्यप्यविदितश्रोणीभरेत्यनेनाऽज्ञातयौवनात्वस्य स्फुटमवगमान्नोत्तमकाव्यत्वं तदंशे, तथाऽप्यन्यत्र सर्वत्रोक्तरीत्योत्तमत्वप्रदर्शनान्न तथा क्षतिः । अत्र नेत्ररोमावल्योरारोप्यमाणयोरुत्पलशैवलाङ्कुरयोरज्ञातत्वलक्षणप्रकृतोपयोगितया परिणामाऽलंकाराऽनुप्राणितो द्वितीयचतुर्थचरणोद्भावितः संशयाऽलंकारः । "आरोप्यमाणस्य प्रकृतोपयोगितया परिणाम" इति तल्लक्षणात् । संशयलक्षणं काव्यप्रकाशे । "ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशय" इति । स चाऽसंबन्धे संबन्धलक्षणाऽतिशयोक्तिशङ्कोद्भावितभ्रान्तिमदलंकाराभ्यां संसृज्यते । शार्दूलविक्रीडित वृत्तम् ॥ ९ ॥

ज्ञातयौवनामुदाहरति ज्ञातयौवना यथेति । का चिदज्ञाततत्पतिका ज्ञातयौवनां नायिकां प्रति वदति । भो अम्भोजलोचने अम्भसि जातमम्भोजम् । एव च दृशि सरसत्व द्योत्यते ।

स्वयम्भूरिति । स्वयम्भूर्न तु नायककरवर्द्धितः । शम्भुः सुखजनकः शिवश्च । पयो न धरतीति विग्रहस्तेन न विरोधः । पयोधरपदस्य स्तने रूढत्वाद्वा न विरोधसम्भावना । कस्य धन्यस्य नखेन

नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥६॥

तद्वल्लोचने नेत्रे यस्याः सा तत्संबुद्धिः । स्वयंभूः स्वयं भवतीति क्विप् । अनुत्पादितः । तथा शम्भुः शं सुखं तस्मै भवतीति शंभुः । सुखोत्पादक इत्यर्थः । मितद्र्वादिभ्य उपसंख्यानमिति भवतेर्डुप्रत्ययः । त्वत्पयोधरः भवत्कुचः । कस्य अविज्ञातस्य । धन्यस्य सौभाग्यशालिनः नखेन करजेन चन्द्रचूडः चन्द्रवच्चन्द्रः स चूडायां मस्तके ऽस्येति स एतादृशः भविष्यति सेत्स्यति । को नाम धन्यस्ते पतिर्यन्नखेनाऽयं चन्द्रचूडतामेष्यतीति भावः । इति प्राचां व्याख्या । धन्यस्य भाग्यवतस्तव प्रियस्य दक्षिणकरस्य वामकरस्य वा नखेन चन्द्रचूडो भविष्यतीत्यपि वदन्ति । मादृशां तु का चित्सखी करकलितकमलकुड्मलस्य स्वीयकुचचकोरकसमानतामालोचयमानां नायिकां प्रत्याह भो अम्भोजलोचने । अम्भसि जातमम्भोजं तद् लोचयति पश्यति तत्सम्बोधनम् । कृत्यल्युटो बहुलमिति बहुलग्रहणाद् कर्तर्यपि ल्युट् । कमलकुड्मलनिजकुचकोरकसमानताविचारकारिणि त्वत्पयोधरः त्वत्सम्बन्धिपयोधर इव पयोधरः । एवं च यथा पयोधरोदयमवेक्ष्य नीलकण्ठा नरीनृत्यन्ति तद्वदस्मदादिसखीजनमनांसि एतद्दर्शनेन नर्तनमिवाऽऽचरन्तीति द्योत्यते । यद्वा ।

चन्द्र इव चन्द्रः स चूडायां चूचुके यस्य तादृशो भविष्यतीति । अग्रेदृशसखीप्रश्नेनैव पृच्छ्यमानाया ज्ञातयौवनात्वं गम्यते । यद्वा कस्येति सखीप्रश्ने धन्यस्येति नायिकोत्तरम् । यद्वा करकलितकमलेन स्वकुचसाम्यं सम्भाव्य पश्यन्तीं नायिकां प्रति कमलाऽपेक्षया व्यतिरेकबोधकं सखीवाक्यमित्याहुः । पयोधरो भविष्यति कस्यापि धन्यस्य नखेन चन्द्रचूडो भविष्यतीत्यन्वयः ॥ ६ ॥

पयोधरश्चिरतरसन्तापतापितचकोरचित्ताऽद्भुताऽऽनन्दजनकस्त-था ऽयमपि मदनाऽनलकवलितकान्तस्वान्तसन्तोषपोषजनक इति ध्वन्यते । ननु मेघसाधारणधर्मवत्ताप्रतिपादनाय यौगिकाऽङ्गी-कारस्याऽऽवश्यकत्वादेतस्यास्त्वप्रसूतायास्तद्बाधात् कथमेत-दिति चेत् ।

क्षीरनाड्यः कुमारीणां जलेन परिपूरिताः ।
क्षीरं न स्रुवते तस्मादार्तवं चाऽधिकं यतः ॥
प्रसूतासु च नारीषु जलेन सह सूयते ।
तेन स्रोतोविशुद्धिः स्यात् क्षीरमाशु प्रवर्तते ॥

इत्यायुर्वेदादप्रसूतास्तनयोरपि पयोवत्त्वात् युक्तैव यौगिकता । पयोधर इत्येकवचनेनोदयसमयमेवाऽऽन्तरशून्यत्वं किं पुनराग्रिम तदिति व्यज्यते । स्वयंभूः । न तु केन चिदुत्पादितः । प्रियतम-करपरामर्शशून्य इत्यर्थः । एवञ्चाऽवश्यसेवनीयत्वमावेद्यते । अथ च शम्भुः सुखजनकः न तु दुःखजनकः । अर्थान्निज-प्रियतमस्य । एवं च सुखदुःखोभयजनकविषयविशेषवत्तयेदं ध्वन्यते । एतादृशः सन् कस्य चित् अगणितगुणगणपुण्य-सम्भारशालिनः । अत एव धन्यस्य सौभाग्यवतः । प्रियत-मस्येति यावत् । नखेन कररुहेण चन्द्रचूडः । अपिरध्याहर्तव्यः । चन्द्र इव चन्द्रः स चूडायामस्येति नखक्षतवानित्यर्थः । चन्द्र-शब्दोत्र वक्रिमाणं लक्षयन् आह्लादकत्वं व्यनक्ति । चूडा-शब्दोपि चूचुकसमीपप्रदेशं लक्षयन् शोभोत्कर्षं व्यञ्जयति । भविष्यति अर्थादचिरेणैव । प्रसिद्धचन्द्रचूडोप्युक्तविशेषणवि-शिष्टः । एवं चैतादृशगुणविशेषविशिष्टस्य त्वत्पयोधरस्य जल-जत्वेपि तत्प्रहृपराङ्मुखे आहिमकरकरसापेक्षोदये विरहिजन-दुरन्तदुःखप्रदे चन्द्रचूडरूपताविरहिणि कमलकुड्मले क्व स-

नवोढा यथा ।

हस्ते धृता ऽपि शयने विनिवेशिता ऽपि
क्रोडे कृता ऽपि यतते बहिरेव गन्तुम् ।
जानीमहे नववधूरथ तस्य वश्या
यः पारतं स्थिरयितुं क्षमते करेण ॥ ७ ॥

मतेति भावः । अत्र श्लेषेणाऽनुगतः पयोधरस्योपमेयस्य उपमाननिष्ठचन्द्रचूडताधर्मेणाऽसम्बन्धाच्चन्द्रचूडसदृश इति प्रतिबिम्बकरणान्निदर्शनालङ्कारः । तल्लक्षणन्तु ।

असम्बन्धे ऽपि सम्बन्धादुपमानोपमेययोः ।
प्रतिबिम्बक्रिया गम्या यत्र स्यात् सा निदर्शना ॥ इति ।

स च भेदे अभेदलक्षणाऽतिशयोक्त्युपमासङ्कीर्णः । वृत्त्यनुप्रासश्च शब्दालङ्कारः । यद्यप्यस्याद्यपादे नकारमात्रव्यञ्जनसादृश्येपि स्वरभेदेन वर्णसाम्याऽभावान्नाऽनुप्रासस्तथापि स्वरसादृश्यस्याऽनियतत्वेन व्यञ्जनसादृश्येनैवाऽनुप्रास इति सर्वाऽऽलङ्कारिकसंमतत्वान्न किं चिद्दूषणम् । वक्त्रं वृत्तम् । लक्षणं तूक्तम् ॥ ६ ॥

नवोढामुदाहरति । नवोढा यथेत्यादि । कश्चित्स्वसखायं प्रत्याह । न केवलमञ्चले अपि तु हस्ते करे धृता ऽपि अवलम्बि-

हस्तइति हस्ते । न त्वञ्चले । न केवलं तावन्मात्रं, शयने न तदुपान्ते । न केवलं तावदेव क्रोडे भुजाभ्यन्तरे । तेन निर्गमाऽयोग्यत्वम् । वहिः स्वापसदनात् । यतते इति लटा तदविरामो ध्वन्यते । लज्जाभयाधिक्येन विश्वासलेशाऽभावः । करेण तदेकदेशाङ्गुल्यादिना भूतलादौ स्थिरयितुमित्यर्थः ॥ ७ ॥

तापि। न केवलमेतावन्मात्रमपि तु तल्पे शयनीये न तु तदन्तिके। तत्रापि न केवलं निवेशिता अपि तु विनिवेशिता स्थापितापीत्यर्थः। न केवलं तल्पनिवेशनमात्रमपि तु क्रोडे भुजाभ्यन्तरे न तु भुजयोः। एवं च निर्गमाऽयोग्यत्वं द्योत्यते। क्रोडो भुजान्तरमित्यमरः। कृतापि व्यापारितापि नववधूर्नवोढा वहिरेव अर्थात् केलिसदनात्। गन्तुम्। यद्वा गन्तुमेव वहिरपि न स्थातुमित्यर्थः। यतते प्रयत्नं कुरुते। लटा सर्वथा-प्रयत्नविरामाऽभावोपि द्योत्यते। लज्जाभयपराधीनत्वात् नास्या विश्वास इति भावः। यद्यप्येवं तथापि यः अनिर्वचनीयगुणगणः कश्चन कृती पारतम् पिपर्ति पारं तनोतीति वा तम्। चपलमित्यर्थः। चपलो रसः सूतश्च पारत इत्यमरः। करेण करैकदेशेनाऽङ्गुल्यादिना स्थिरयितुम्। अर्थाद्भूतले स्थिरीकर्तुं क्षमते दक्षो भवति तस्यैव। प्राक्तन एवकारोऽत्रापि सम्वध्यते। वश्या आक्रमणीया भवति। इति वय जानीमहे प्रतीमः। एवं च चपलस्यैतादृशस्थिरीकरणमसम्भवि यथा तथा नवोढाया अपि तदिति भावः। अत्रोपमानोपमेयसमानधर्माणां विम्वप्रतिविम्वतया निर्देशात्साधर्म्येण दृष्टान्तालङ्कारः। "दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिविम्वन"मिति तल्लक्षणात्। स च स्वभावोक्त्यनुगतः। वसन्ततिलकावृत्तम्।

कर्णस्फुरत्कनककुण्डलमण्डिता या
भावान्विता चरणमञ्जुलनूपुरश्रीः।
गन्धान्विता सुरमना वलयावनद्धा
कान्ता वसन्ततिलका मुदमातनोति॥ इति लक्षणात्॥७॥

विश्रब्धनवोढा यथा ।

दरमुकुलितनेत्रपालि नीवी
नियमितबाहु कृतोरुयुग्मबन्धम् ।
करकलितकुचस्थलं नवोढा
स्वपिति समीपमुपेत्य कस्य यूनः ॥ ८ ॥

विश्रब्धनवोढामुदाहरति । दरमुकुलितेति । का चित्का चित्सत्याह । दरमीषत् । ईषदर्थे दरो ऽव्ययमिति विश्वः । मुकुलिते मुकुलीभावं प्रापिते । लज्जयेति भावः । नेत्रपाल्यौ यत्र क्रियायां तथा दरमुकुलितनेत्रपालि । पालिरिति स्त्रीलिङ्गनिर्देशेन लज्जायामौचित्यमावेद्यते ।

मनागञ्चितपक्ष्माग्रा त्रपात्रस्तकनीनिका ।
संत्रस्तोर्ध्वपुटा दृष्टिर्लज्जिता लज्जितस्त्रियः ॥

इति लक्षणादियं लज्जिता दृष्टिः । यत्तु दरेण भयेनेति व्याख्याय त्रस्ता दृष्टिरियमिति मतं तत्

त्रासनिष्क्रान्तमध्या ऽन्तर्विस्तारितपुटा भिया ।
विलोलतारका भीत्या दृष्टिरुक्ता भयान्विता ॥

दरमुकुलितेति । दरमीषत् । मुकुलितत्वं लज्जया । नीवी कट्यंशुकग्रन्थिः सैव नीवी मूलधनम् । नारीकट्यंशुकग्रन्थौ नीवी मूलधनेपि चेति विश्व. । तेनाऽतिसंरक्षणीयत्वम् । नियमितत्वेन दुष्परिहरत्वम् । बन्धपदं दृढत्वव्यञ्जकम् । तेनापि दुष्परिहार्यत्वम् । करेणाऽर्थादपरेण । एकवचनेन तयोर्निरन्तरत्वम् । स्थलपदेन सकलहृत्प्रदेशव्यापकत्वेन पुष्टत्वम् । तस्य कस्य भाग्यशालिनः । ईदृशनवोढास्वाप एव दुर्लभः किं पुनस्तद्रतिलाभ इति भावः ॥ ८ ॥

इति तल्लक्षणाऽयोगाद्भ्रमितमेव । 'सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्ये'त्यत्र तु क्रोधोद्रेकोद्धतरुद्रनेत्रे समुद्भूतवीतिहोत्रदर्शनेनाऽऽकुञ्चितैव दृष्टिः ।

आकुञ्चत्पुटपक्ष्माग्रा सम्यक्कुञ्चत्कनीनिका ।
या दृष्टिः कुञ्चिता सोक्ता तेजोदुष्प्रेक्ष्यवस्तुनि ॥

इति तल्लक्षणात् । तथा नीवीनियमितवाहु । नीव्यां कट्यंशुकग्रन्थौ नारीकट्यंशुकग्रन्थौ नीवी स्यादिति वैजयन्ती । यद्वा नीवीव नीवी । नीवी मूलधनेऽपि स्यादिति विश्वः । एवं चाऽतिसंरक्षणीयत्वमात्रेयते । तत्र नियमितः अनन्यकर्मतया स्थापितः । एवं च ततस्तस्य दुष्परिहरत्वं ध्वन्यते । वाहुर्यत्र । तथा कृतोरुयुगवन्धम् । कृतः सम्पादितः । एवं च बुद्धिपूर्वकत्व वन्धे ध्वन्यते । ऊरुयुगमस्य वन्धः परस्परसंलग्नता । युग्मपदेन साहजिकसाहचर्य्यं व्यज्यते । बन्धपदं दृढत्वं व्यनक्ति । तेन च दुष्परिहरत्वं ध्वन्यते । तथा करकलितकुचस्थलम् । करेण । एककरस्य कट्यंशुकग्रन्थौ नियमितत्वात् अर्थादपरेण । कलितमाच्छादितं कुचस्थल यत्र । तथा करेणेत्येकवचनेन कुचयोर्निरन्तरत्वं, स्थलपदेन च निखिलहृत्प्रदेशस्याऽऽच्छादिनत्वेन कुचयोरतितरामाच्छादितत्वमभिव्यज्यते । नवोढा कस्य चित् अभिनवाऽनेकभाग्यसम्भारवतः । एव चैतादृशनवोढासान्निध्यस्य दुर्लभत्वमावेद्यते । यूनः तारुण्यशालिनः । समीपमन्तिकमुपेत्याऽऽसाद्य स्वपिति निद्राति । एव चैतादृशनवोढास्वापमात्रस्य दुर्लभत्वं किमु वाच्यं तद्विलसितस्येति भावः । अत्र स्वभावोक्तिरलङ्कारः । स च युवतीसमीपस्वापस्य पादत्रयार्थहेतुत्वात्काव्यलिङ्गाऽनुमाणितः । पुष्पिताग्रावृत्तम् ।

समानलज्जामदना मध्या। एषैवाऽतिप्रश्रयादतिविश्रब्धनवोढा। अस्याश्चेष्टा। सागसि प्रेयसि धैर्ये वक्रोक्तिं, रधैर्ये परुषवाक्। यथा।

द्विजवरकररज्जुकर्णपूरौ
प्रथमतृतीयपदौ यदा भवेताम्।
द्विजपदगुरुरज्जुकर्णयुक्तौ
यदि चरणावपरौ च पुष्पिताग्रा॥
इति तल्लक्षणाक्रान्तत्वात्॥ ८॥

प्राप्ताऽवसरत्वात् मध्यामुदाहर्तुं तल्लक्षणमाह समानेत्यादि। समानौ समबलतयोपरुद्धपरस्परप्रसरौ लज्जामदनौ यस्याः सा। न्यूनाऽधिकभावशून्यमदनलज्जावत्त्वमिति फलितोऽर्थः। लज्जावत्त्वमात्रस्य मुग्धायामतिप्रसक्तत्वान्मदनवत्त्वं, तद्वत्त्वमात्रं च कुलटायामतस्तदुभयं, तच्च प्रगल्भायामतः समानेति। तत्र च मदनस्याऽधिकत्वान्मध्येति लक्ष्यनिर्देशः। एषैव चाऽतिप्रश्रयादतिविश्रब्धनवोढेति क्वाचित्कः पाठस्तु अतीव धार्ष्ट्याऽभाववत्त्यां तस्यां धार्ष्ट्यप्रयुक्तमध्याव्यवहाराऽसम्भवात् अनुदाहृतत्वाच्चाऽनुपादेयः। वस्तुतस्तु अत्यन्तधार्ष्ट्याऽभाववत्त्वे प्रमाणाऽभावान्न दोषः। लक्षणज्ञानाय चेष्टा-

समानेति। समबलतयोपरुद्धपरस्परत्वं मध्यात्वम्। मुग्धायामतिप्रसङ्गवारणाय लज्जामदनेत्युभयम्। प्रगल्भायामतिव्याप्तिवारणाय समानेति। सा च मदनाधिका। अतिविश्रब्धेति। तस्या धार्ष्ट्याऽभावान्मध्यात्वं चिन्त्यम्। सर्वथा तस्या धार्ष्ट्याभाववत्त्वे प्रमाणाभाव इत्यप्याहुः। आगो ऽपराधः।

स्वापे प्रियाऽऽननविलोकनहानिरेव
स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ।
इत्थं सरोरुहमुखी परिचिन्तयन्ती
स्वापं पिधातुमपि हातुमपि प्रपेदे ॥ ९ ॥

माह । अस्याश्चेत्यादि । साऽऽगसि साऽपराधे । आगो ऽपराधो मन्तुश्चेत्यमरः । प्रेयसि प्रियतमे । सतीति शेषः । धैर्ये धैर्यवत्त्वे वक्रोक्तिः श्लेषेण काक्का वा अर्थान्तरप्रसायकं वचनं यस्या इत्यर्थः । वक्रवाक्यप्रबन्धिकेति यावत् । अधैर्ये धैर्याऽभाववत्त्वे परुषा निष्ठुरा वाक् यस्याः सा ।

मध्यामुदाहरति स्वापे इत्यादि । का चित्कां चिदित्याह । स्वापे निद्रायां प्रियाऽऽननविलोकनहानिरेव प्रियस्य न तु पतिमात्रस्य । एवं च विलोकने ऽवश्यकर्त्तव्यत्वं व्यज्यते । आननं वदनं तस्य विलोकनं प्रेक्षणं तस्य हानिरेव नाश एव । एवं चैतत्कालीनप्रियतममुखदर्शनस्याऽग्रे दुष्प्रापत्वं ध्वन्यते । हानिपदेनाऽसहिष्णुत्वमावेद्यते । एवं च मदनरसरभसवशात्प्रियतमवदनाऽवलोकनविघ्नीभूतनिद्राऽवसरे जीवननैष्फल्यं मन्यतइति द्योत्यते । तथा स्वापच्युतौ निद्रात्यागे प्रियकरग्र-

स्वापेति । प्रियस्य न तु पत्युः । तेन विलोकनस्याऽऽवश्यकत्वहानिरेव । तेनैतत्कालिकप्रियाऽऽननदर्शनस्य दुर्लभत्वम् । हानिपदेनाऽसहता करग्रहणे इत्यर्थः । प्रियत्वेनाऽनिषेध्यता । तथा च लज्जाहानिरूपाऽनिष्टलाभः । प्रपेदे । अनिष्टद्वयभीतिजन्यसन्तापव्याकुला बभूवेत्यर्थः । एतस्योदाहरणं त्वन्यत्र द्रष्टव्यम् ॥ ९ ॥

ग्रहणप्रसङ्ग एवेत्येवकारो ऽत्रापि योज्यः । प्रियेण करग्रहणं रत्यर्थमिति भावः । अत्रापि प्रियपदमनिषेध्यत्वम्, एवकारश्च कार्यान्तरप्रसराऽभावं व्यञ्जयति । न च प्रियपदद्वयोपादानात् कथितपदत्वं दोष इति वाच्यम् । यथा वदनविलोकनाऽवश्यकर्त्तव्यत्वे प्रियत्वं प्रयोजकं तथैव करग्रहणाऽनिषेध्यत्वे इति व्यञ्जयितुं तदुभयोपादानात् । 'उदेति सविता ताम्रस्ताम्र एवाऽस्तमेति चे'तिवत् प्रत्युताऽनुगुणत्वम् । तस्य प्रसङ्गः पुनः पुनः कर्त्तव्यत्वमित्यर्थः । एवं चाऽनिवारणीयत्वं ध्वन्यते । स्वापच्युतिरपि प्रियकरग्रहणप्रसङ्गायैव स्यादित्यर्थः । इत्थं परिचिन्तयन्ती । यदि क्रियेत स्वापस्तदा प्रियतमवदनविलोकनहानिरूपाऽनिष्टमापद्येत, यदि च न क्रियेत तदा प्रियकरग्रहणाऽनिवारणकृतलज्जाहानिरूपाऽनिष्टमापद्येतेत्युभयतस्पाशघात एवेति किमनयोर्ज्ज्याय इति विशेषतः स्वमनस्येव विचारयन्ती सरोरुहमुखी कमलवदना । सरोरुहपदं जडत्वं, तच्च चिन्ताऽतिशयं व्यञ्जयति । स्वापं निद्रां विधातुम् । लज्जात्यागस्य दुष्करत्वादिति भावः । हातुं त्यक्तुमपि । प्रियवदनविलोकनहानेरसह्यत्वादिति भावः । प्रपेदे । अनिष्टद्वयसम्पातभीतिव्याकुला बभूवेत्यर्थः । अत्र च विधानहानाभ्यां तुल्यबलतया लज्जामदनसाम्यवर्णनेन स्फुटैव लक्षणोदाहरणयोः सङ्गतिः । अत्र च हानविधानयोरन्यतरनिश्चयाऽभावेन सन्देहालङ्कारः । स च स्वापतत्त्यागयोर्विधेयत्वेनाऽनिष्टसम्भावनया तन्निषेध इत्येवं विधेरुक्तत्वे निषेधस्याऽस्फुटत्वे गूढाक्षेपाऽनुप्राणित उपमयापि संसृज्यते । उक्तञ्च । "गूढाक्षेपो विधौ व्यक्ते निषेधे चाऽस्फुटे सती"ति । वसन्ततिलकावृत्तम् । लक्षणं तूक्तम् ॥ ९ ॥

पतिमात्रविषयककेलिकलापकोविदा प्रगल्भा। वेश्यायां कुलटायां पतिमात्रविषयत्वाऽभावान्न तत्राऽतिव्याप्तिः। अस्याश्चेष्टा रतिप्रीतिरानन्दात्संमोहः।

लब्धावसरत्वात् प्रगल्भामुदाहर्तुं तल्लक्षणमाह। पतिमात्रेत्यादि। पत्यतिरिक्तकेलिकलाप्रावीण्याऽभाववत्त्वे सति पतिकेलिकलाप्रावीण्यमित्यर्थः। पतिमात्रपदयोः क्रमेण कृत्यमाह। वेश्यायामित्यादि। कुलटापदं परकीयालक्षकम्। अस्याश्चेष्टाप्रदर्शनमुखेन भेदमाह। अस्यास्त्विति। भेदद्वयमित्यध्याहारः। तदेवाह रतिप्रीतिरानन्दात्संमोह इति। रतौ सम्भोगे प्रीतिः इतरापेक्षया यस्या इत्यर्थः। आनन्दात्सुखात्संमोहोऽज्ञता तद्वतीत्यध्याहारः। एवं चैतदन्यतरविशेषित प्राक्तनलक्षणमेव द्वयोर्लक्षणं वेदितव्यम्। ननु यथा मुग्धासामान्योदाहरणमुक्त्वा तद्भेदप्रदर्शन कृत तथा ऽत्राकरणादिीतिविरोध इति चेत्। न ह्यय नियमः। अत एव परकीयायाः सामान्योदाहरणमनुक्त्वापि विशेषोदाहरणम्। यत्तु प्रगल्भायाश्चेष्टामाह अस्यास्त्विति व्याख्यानम्। तन्न। प्रथमा यथेत्यादिग्रन्थाऽस्वरसात्। चेष्टाभेदाद् भिन्नोदाहरणप्रदर्शने भर्तुः शु-

पतिमात्रेति। इदं विशेषणं स्वीयात्वसामान्यलक्षणलब्धमेवाऽनूद्यते। तस्य कृत्यमाह वेश्यायामिति। वेश्यायां सामान्यवनितायाम्। कुलटायां, परकीयोपलक्षकमेतदित्याहुः। रतौ भोगे प्रीतिर्मुग्धापेक्षया ऽधिकेत्यर्थः। संमोहो ऽज्ञानम्। अस्यास्त्वित्यस्य भेदद्वयमिति शेषः। तथा च प्रगल्भा द्विविधा रतिमती आनन्दसंमोहवती चेत्यर्थः। चेष्टापरतया योजन तु प्रथमा यथेत्यादिग्रन्थस्वरसाविरुद्धम्।

प्रथमा यथा ।

संस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य कण्ठस्थलं
निष्पीयाऽधरबिम्बमम्बरमपाकृष्य व्युदस्याऽलकम् ।

भ्रूपेत्यादावपि तद्वृत्तनिबन्धनभिन्नोदाहरणप्रदर्शनापत्तेश्च ।

आद्यामुदाहरति संस्पृश्येत्यादि । स्तनं संस्पृश्य । अत्यन्तं स्तनमर्दनं विधायेत्यर्थः । स्तनमित्येकवचनं पीनताऽतिशयं व्यनक्ति । वदनमाकलय्य स्वमुखेन चुम्बनार्थं संयोज्येत्यर्थः । आकलय्येति पदं प्रीत्यतिशयमावेदयति । कण्ठस्थलं कण्ठप्रदेशं सम्यगालिङ्ग्य । एवं च गाढालिङ्गनता व्यज्यते । तद्व्यतिरेकेण तस्याऽसम्भवात् । आलिङ्गनं चैतद्दुग्धजलाऽभिधानम् ।

अङ्के स्थिता च शयने मृगशावकाक्षी
गात्रे प्रियस्य विशतीव निजाऽन्तरङ्गात् ।
गाढोपगूहनवशेन निरन्तरं यत्
संश्लेषमाहुरिह दुग्धजलाऽभिधानम् ॥

इति तल्लक्षणात् । यद्वा जघनोपश्लेषाख्यमेतत् । उक्तं च -

ऊरुकलिततदीयश्रोणिरस्योपरिष्टाद्
व्रजति यदिह नारी स्रस्तकेशोत्तरीया ।
करजदशनकृत्यं चुम्बनं वा विधित्सुः
कथयति जघनोपश्लेषमेतन्मुनीन्द्रः ॥ इति ।

संस्पृश्येति । अतिशयेनाऽवमृश्येत्यर्थः । स्तनमित्येकवचनेन पीनताऽतिशयो नैरन्तर्यश्च । आकलय्य स्वमुखेन चुम्बनार्थं संयोज्य । अम्बराकर्षणे निश्चलतया लज्जाविरहः । तेन रतिप्रीतिर्व्यज्यते । व्युदस्य उत्क्षिप्य । एवं बाह्यरतेन नायिकामुत्कण्ठितां कृत्वा आन्तर-

देवस्याऽम्बुजिनीपतेः समुदयं जिज्ञासमाने प्रिये
वामाक्षी वसनाऽञ्चलैः श्रवणयोर्नीलोत्पलं निह्नुते॥ १०॥

अधरबिम्बम् । अधरो बिम्बमेवेति रूपकम् । अधरपदं कोमलतां व्यनक्ति । बिम्बपदमारक्ततां व्यनक्ति । यद्वा अधरमपकृष्टं बिम्बम् । अर्थात्सुधाकरस्य । एवं चाऽधरे सुधाऽधिकरसवत्त्वमावेद्यते । निपीय पानं विधायेत्यर्थः । निपीयेति पीङ् पानइत्यस्य ल्यपि । पिबतेस्तु न । न ल्यपीतीत्वनिषेधात् । निरा चुम्बनबाहुल्यं व्यज्यते । अम्बरं परिधानीयम् । अम्बरपदं नायिकायां सुधादीधितिदीप्तिच्छटाचमत्कारवत् कान्तिविशेषवत्तामावेदयति । एकवचनं च लज्जाविरहं व्यनक्ति । स च रतिप्रीतिम् । अपाकृष्य परिहृत्य । अलकं केशकलापम् । अलकपदं कमनीयतामावेदयति । एकवचनं बन्धनविशेषम् । व्युदस्य उत्क्षिप्य । एवमान्तररतप्रसङ्गे पूर्वाङ्गीभूतबाह्यरतेनाऽऽलिङ्गनादिना नायिकामुत्कण्ठयित्वेत्यर्थः । उक्तं चनन् ।

रतेः प्रतिबन्धकसूर्योदयं जिज्ञासमाने प्रियइत्याद्यन्वय. । यद्वा । पद्मिन्या रात्रिगतस्याऽऽह्लादकत्वाऽभावेन दिवारतेन तथात्वस्य कामशास्त्रसिद्धत्वेन सूर्योदयं जिज्ञासमाने सति दिवामैथुनं न कुर्यादिति निषेधाद्रतिविरतिं करिष्यतीति भ्रान्त्यां सत्यां नीलोत्पलं नीलकमलं रविप्रकाश्यं निह्नुते गोपयतीत्यर्थ. । अत्रोत्पलपदस्य चन्द्रविकासिन्येव शक्ते. चिन्त्यमेतत् । वस्तुतो नीलोत्पलं नीलकुसुमं वसनाञ्चलैर्निह्नुते गोपयतीत्यर्थः । तेन तन्मुकुलीभावकृतसूर्योदयाऽनुमानशङ्कानिरासः । यद्वा । मुकुलीकरोतीत्यत्र तात्पर्यम् । तेन च सूर्यो नोदित इति ज्ञापयतीत्यर्थं इत्याहुः ॥ १० ॥

मोहनं नाऽऽरभेत्तावद्यावन्नोत्कण्ठिता प्रिया ।
अन्यथा न सुखोत्पत्तिरशीते ऽर्ककरा इव ॥ इति ।

यद्यपि "आदौ रतं बाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनमेव पूर्व"मिति आलिङ्गनस्य पूर्वकालीनत्वाभिधानादत्र तदभावात्कामशास्त्रविरोधस्तथापि तथैव योजनया स परिहरणीयः । अम्बुजिनीपतेः देवस्य सूर्य्यस्य समुदयं सम्यक्तया प्राकट्यम् । "न दिवा मैथुनं कुर्या"दिति रीत्या रतेरन्तरायभूतमिति भावः । प्रिये वल्लभे जिज्ञासमाने ज्ञातुं कृतोद्योगे सतीत्यर्थः । ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदम् । वामे सुन्दरे अक्षिणी यस्याः सा नायिका वसनाञ्चलैः वस्त्रप्रान्तैः श्रवणयोः कर्णयोस्तत्सम्बन्धीत्यर्थः । नीलोत्पलं नीलकमलम् । सूर्योदयविकासित्वात्तस्येति भावः । निह्नुते स्थगयतीति प्राञ्चः । वयं तु देवस्य क्रीडारसिकस्याऽम्बुजिनीपतेः कमलिनीनायकस्य समुदयं दिवारात्रिविभागज्ञापकमित्यर्थः । प्रिये प्रियरतिदातृत्वादिति भावः । जिज्ञासमाने सति ।

रजनीसुरतेषु पद्मिनी न सुखं याति निसर्गतः क्वचित् ।
दिवसे शिशुयोगतोऽपि सा विकसत्यम्बुजिनी यथा रवेः ॥

इत्यादिकामतन्त्रोक्त्या पद्मिनीनायिकायास्त्वसन्तं दिवसीयसुरतस्य सुखाऽतिशयप्रतिपादनाद्रात्रिशेषे बाह्यरतं विधायाऽऽन्तररतार्थं कामतन्त्रनिपुणे प्रिये दिवसज्ञानाय सूर्योदयं ज्ञातुमिच्छति सतीत्यर्थः । वामाक्षी वामे वक्रे अक्षिणी यस्याः सा । वामं सव्ये प्रतीपे चेति विश्वः । श्रुतिगतविकसत्कमलदिदृक्षयेति भावः । वसनाञ्चलैः । अञ्चलैरिति बहुत्वोक्त्या विकासरभसतया बहुप्रयत्नेन तत्सङ्गोपनमावेद्यते । श्रवणयोः कर्णयोः तत्सम्बन्धीत्यर्थः । द्विवचनेन पर्यायेणोभयभूषण-

रतान्तसमये मया सकलमेतदालोकितं
स्मृतिः क्व रतिः क्व क्व तवालि शिक्षाविधिः ॥११॥

आनन्दसंमोहवतीमुदाहरति नखक्षतेति। काचिन्नायिका कृतशिक्षाविशेषां सखीं प्रत्याह हे आलि सखि। आलिः सखी वयस्या चेत्यमरः। एवं च रहस्यवार्ताकथनयोग्यता ध्वन्यते। उरःस्थले। एवं च किमु वाच्यं कुचयोरिति भावः। नखक्षतं, क्षतपदेन यत्र पीडाजनकमपि न ज्ञातं तत्र का वार्ताऽन्यस्येत्यानन्दसंमोहो व्यज्यते। एकवचनेन वैचित्र्यं तेन च रतेरतिशयशालित्वं द्योत्यते। अधरतले अधराधःप्रदेशे। तलं स्वरूपाऽधरयोरिति विश्वः। उपरिभागादधोभागस्य किञ्चित् काठिन्यादायासदत्तं दन्तक्षतं व्यथाकरमपि नाऽवगतमिति तलपदेनाविष्क्रियते। "उच्छूनकं स्यादधराऽवखण्डे ज्ञेयं दृढापीडनतस्तदेवे"ति लक्षणादुच्छूनकाख्यं दन्तपदमेतत्। अधरदले इति पाठे दलपदं कोमलत्वं लक्षयत् पीडाविशेषयोग्यत्वं ध्वनयति। एवं च कोमले व्रणस्याऽतिदुःखदत्वेपि तदज्ञानादानन्दसंमोह एवाऽभिव्यज्यते। रदस्य दशनस्य। रदपदेन काठिन्यं तेन

तु न जाने इतीतरनायिकापेक्षया स्वस्मिन्व्यतिरेको व्यज्यते। तदपि दृष्टमेव सामान्यतो न त्विदमिनि विशिष्य ज्ञातमिति भावः। एवं च सति स्मृतिः क्व अभ्यस्तरतवैचित्र्यस्येति शेषः। प्रियतमदर्शनजनितानन्देनेति भावः। रतिः क्व चेति। रतिर्नखक्षतादिरूपा बाह्यरतिः तदव्यवहिताऽऽन्तररतप्रसङ्गे क्व सापि विस्मृतेति। एवञ्चाऽऽलि तव शिक्षाविधेर्दूरापास्तं स्मरणमिति भावः। केचित्तु यदुक्तं रतिसमये इदं न दृष्टमिति तदेवोपपादयति रतिः क्वेत्यादिना, स्मृतिरत्योर्विरोधादिति भाव इत्याहुः॥ ११॥

च पीडाऽतिशयजनकत्वं गम्यते । अत्रापि संमोहः पूर्ववदेव व्यङ्ग्यः । षष्ठी रतनिवृत्तावपि आद्यपीडातुल्यपीडाप्रदत्वं व्यनक्ति । अत्रापि पूर्ववदेव व्यङ्ग्यम् । वकुलमालिका च्युता । एवं च रतेरनेकप्रकारत्वं व्यज्यते । मुक्तावलिः मुक्ताहारः । विगलिता त्रुटिता । एवं च दृढालिङ्गनप्रदर्शनात्तदेवाऽभिव्यज्यते । एतच्च नखक्षतादि सकल नैकमपि पूर्वं ज्ञातमिति भावः । मया । एवं च स्वाऽनुभवमीदृशमहं निवेदयामि न जानामि भवादृशीनां गतिमिति ध्वन्यते । तेन चेतरनायिकाभ्यो ऽतिशयः स्वस्मिन्नावेद्यते । अत एव प्राञ्चः

अन्यास्ताः सखि योषितः प्रियतमे सर्वाङ्गलग्नेऽपि याः
प्रागल्भ्यं प्रथयन्ति मोहनविधावालम्ब्य धैर्यं महद् ।
अस्माकं तु तदीयपाणिकमलेऽप्युन्मोचयत्यंशुकं
कोयं का वयमत्र किं नु सुरतं स्वल्पापि मे न स्मृतिः ॥

इति वर्णितवन्तो रतिप्रीतिमतीम् । रतान्तसमये सुरताऽवसानकाले न तु सुरतान्ते आलोकितं दृष्टमित्यर्थः । एव चेदमित्थमिति न विशिष्टपरिचितमिति भावः । तथा सति तत्र स्मृतिः स्मरणसामान्यं क्व च रतिः रतिस्मरणमित्यर्थः । क्व च इत्यपरं तव शिक्षायाः अर्थाद्रतिविशेषस्य विधिः कर्तव्यमित्यर्थः । क्व च क्वापीत्यर्थः । एव च तदङ्गसङ्गमात्रादेव मम स्मरणसामान्यमपयातं किं पुनर्विदितस्मरण, किमु वा रतिविशेषविषयकत्वदीयशिक्षास्मरणमिति भावः । इति स्मृतिः क्व च रतिरित्यादेर्व्याख्यानमपव्याख्यानम् । 'क्व चित्ताम्बूलाक्तः क्व चिदगरुपङ्काङ्कमलिनः क्व चिच्चूर्णोद्गारी क्व चिदपि च साऽलक्तकपद' इत्यादिप्राचीनोदाहृते प्रागल्भ्यप्रयुक्तसुरतवैचित्र्यकोविदत्वप्रदर्शनाऽनुपपत्तेः । तस्मादेवमत्राऽभिप्रायः । प्रियतमदर्शनसमये

मध्याप्रगल्भे प्रत्येकं मानाऽवस्थायां त्रिविधे। धीरा, अधीरा, धीराऽधीरा चेति। व्यङ्ग्यकोपप्रकाशा धीरा। अव्यङ्ग्यकोपप्रकाशा अधीरा। व्यङ्ग्याऽव्यङ्ग्यकोपप्र-

एव सञ्जातनवीनाऽनेकविधरतिरीतिस्फूर्तिवशान्मया यत्राऽभ्यस्तरतवैचित्र्यं विस्मृतं तत्तदीयाऽङ्गसङ्गजनिताऽऽनन्दनिर्भरतया जायमानदुःसहनखक्षतादिरूपबाह्यरतमपि तदव्यवहिताऽऽन्तररतप्रसङ्गे विस्मृतं, क्व तत्र सुरतजन्याऽऽनन्दप्रतिबन्धकत्वदीयमानधारणाद्युपदेशस्मरणमिति भावः। अत एव लोकेपि रणाङ्गणे युद्धरसिकः कश्चिद्विस्मृताऽभ्यस्तपुत्रमित्रसङ्गतिसुखो ऽज्ञातव्रणवेदनाभूपादिभ्रंशो युद्धे प्रतिभटदलनाऽनुकूलशस्त्राऽस्त्रप्रहरणादिकमेव स्मरति न तु समयविशेषे देशविशेषे सामाद्युपायाऽसम्भवे योद्धव्यमिति नीतिनिपुणोपदेशमित्यलं पल्लवितेन। स्वभावोक्तिरलङ्कारः। तल्लक्षणं तूक्तम्। पृथ्वीवृत्तम्॥ ११॥

लब्धावसरत्वान्मध्याप्रगल्भे भेदान्तरैरनेकविधे इत्याह। मध्याप्रगल्भे इति। मानाऽवस्थायां मानस्य वक्ष्यमाणलक्षणस्याऽवस्थायाम्। तत्प्रधानत्वेन प्रत्येकं त्रिविधे। मध्याप्रगल्भापि त्रिप्रकारेत्यर्थः। तानेव प्रकारानाह धीरेत्यादि। धैर्यवती धीरा। अधैर्यवती अधीरा। धैर्याऽधैर्यवती धीराऽधीरा इत्यर्थः। ननु धैर्याऽधैर्ययोर्विरोधादेकत्र युगपद्वृत्तित्वात्कथं तद्व्यपदेश इति चेन्न।

धीराऽधीरेति। एकत्र धैर्याऽधैर्यकार्यदर्शनेन धीरत्वाऽधीरत्वे विरुद्धे इति न शङ्क्यम्। अत्र स्वीयामध्यालक्षणघटितव्यङ्ग्यमात्रक्रोधप्रादुर्भाववत्त्वं मध्याधीरात्वम्। एवमुत्तरत्रापि। अव्यङ्ग्यः स्फुटः।

काशा धीराऽधीरा । इयांस्तु विशेषः । मध्याधीरायाः कोपस्य गीर्व्यञ्जिका । अधीरायाः परुषवाक् । धीराऽधीरायाश्च वचनरुदिते कोपस्य प्रकाशके । प्रौढाधी-

वाले नाथ विमुञ्च मानिनि रुष कोपान्मया किं कृतं
खेदो ऽस्मासु न मे ऽपराध्यति भवान् सर्वे ऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याऽग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नाऽस्मीत्यतो रुद्यते ॥

इति प्राचीनोदाहरणादेकत्र वक्रोक्तिमत्त्वादितत्कार्योदयदर्शनात्तयोरविरोधात् ।

प्रथमोद्दिष्टत्वान्मध्याधीरां लक्षयति व्यङ्ग्येति । व्यङ्ग्यः व्यञ्जनावृत्तिसमधिगम्यः । केन चिल्लिङ्गेनाऽनुमेय इति वा । कोपप्रकाशः । कोपस्य क्रोधस्य । प्रकाशस्य तेजोधर्मत्वात् कोपे वाधात् तत्प्रादुर्भावो ऽत्र लक्ष्यते । तेन च कोपे ऽनौद्धत्यमावेद्यते । तथा च व्यङ्ग्यः कोपप्रकाशः क्रोधप्रादुर्भावो यस्याः सा । एवं च पतिमात्राऽनुरागवत्त्वे सति समानलज्जामदनत्वे सति व्यङ्ग्यमात्रक्रोधप्रादुर्भाववत्त्वविशेषित मध्याधीरालक्षणमिह बोध्यम् । प्रथमात्समस्तात्परकीयादिव्युदासः । द्वितीयात्प्रगल्भाधीरादिव्युदासः । मात्रपदादधीरादेः । एवमग्रेपि । धीरेति लक्ष्यनिर्देशः । व्यञ्जकमेवाह कोपस्येति । गीः शब्द इ-

गीरिति । शब्द इत्यर्थः । इदमुपलक्षणं चेष्टाया अपि । शब्दोऽप्यपरु-
षम् । अधीराया परुषवागित्युक्तेः । अत्र परुषवागित्यस्य को-
पप्रकाशिकेति शेषः । इद रुदितस्याप्युपलक्षणम् । वचनरुदिते व-
चनमपरुषं वक्रोक्तिरूपम् । रुदितं परुषवचस उपलक्षणम् । प्रौढा

रायास्तु रतौदास्यम्, अधीरायास्तर्ज्जनताडनादि, धीराऽधीराया रतौदास्यं तर्ज्जनताडनादि च कोपस्य प्रकाशकम् । धीरादिभेदाः स्वीयाया एव न परकीयाया इति प्राचीनलिखनमाज्ञामात्रम् । धीरत्वमधीरत्वं तदुभयं वा माननियतं, परकीयायां मानश्चेत्तदा तासामप्याव-

त्यर्थः । ये तु धीरिति पाठमादृत्य धियः परकीयबुद्धेरप्रत्यक्षतया अव्यञ्जकत्वाद् व्यापारविशेषो लक्ष्यतइति व्याचख्युस्ते निष्प्रयोजनकलक्षणाङ्गीकारप्रवणा धीराऽधीरायाश्च वचनरुदिते प्रकाशिके इत्यग्रिमग्रन्थाऽनालोचका वचनं वक्रमित्यर्थ इति तद्व्याहृतस्ववचोविरोधभीतिशून्या अतीन्द्रियस्यापि शुद्धमातापितृजत्वादेर्व्यञ्जकत्वमिति शास्त्रसिद्धान्तमजानन्तो नमस्या एव । मध्याम् अधीरां लक्षयति । अधीराया इति । परुषवागिति रुदितस्याप्युपलक्षकम् । तृतीयां लक्षयति धीराऽधीरा इत्यादि । वचनं वक्रोक्तिः । रुदितमिति परुषवचसोऽप्युपलक्षकम् । लब्धाऽवसरत्वात्प्रौढाधीरादिकं लक्षयति प्रौढाधीराया इत्यादि । अत्र चेष्टाघटितलक्षणप्रदर्शनाच्चेष्टापि प्रदर्शितेति न न्यूनता । प्रसङ्गादाह धीरादिभेदा इत्यादि । आज्ञामात्रं न युक्तिसहमिति भावः । तदेवाह । धीरत्वमित्यादि । माननियतं माननान्तरीयकं, मानव्यापकमिति यावत् । ततः किमित्यत आह । परकीयायां मानश्चेदिति । प-

धीरायास्त्विति । अत्र चेष्टाप्रदर्शनेन तद्घटितं लक्षणमपि दर्शितमेवेति न न्यूनता । धीरादिभेदा इति । इदमुपलक्षणम् । मुग्धामध्यादिभेदा अपि स्वीयाया एवेत्यप्याज्ञामात्रमिति ध्येयम् । दृश्यते हि मालती मध्या परकीया चेति ।

श्यकत्वात् । मानश्च स्वकीयाया एव न परकीयाया इति वक्तुमशक्यत्वात् । मध्या धीरा यथा ।

लीलाऽलिपुञ्जे व्रजतो निकुञ्जे
स्फारा बभूवुः श्रमवारिधाराः ।

रकीयायां यदि मानस्तदा धीरात्वादिधर्म्माणामवश्यम्भाव इति भावः । ननु परकीयायां स एव नास्त्यत आह । मानश्चेति । प्रियाऽपराधज्ञानरूपतत्कारणसत्त्वादिति भावः । ननु कन्यकायां यदि मानस्तदा मुग्धायामपि तत्तुल्यतदङ्गीकारस्याऽऽवश्यकत्वात्तन्नान्तरीयकधीरात्वादिभेदानां तस्यां सम्भवात्तदनभिधानान्न्यूनतेति चेद्द्वयोरवस्थाविशेषाऽघटितलक्षणलक्षितायाः कन्यकायास्तु मानवत्त्वस्य युक्तिसहत्वान्मुग्धायास्तु वयोऽवस्थाविशेषलक्षणलक्षितायास्तदसम्भवात्तन्नान्तरीयकधीरात्वादिभेदानामसम्भवादनभिधानमिति न न्यूनता । वस्तुतस्तु ज्ञातयौवनारूपमुग्धाभेदस्यैते भेदा भवितुमर्हन्तीति तदनभिधानान्न्यूनतैव ।

प्रथमं लक्षितत्वात्प्रथमतो मध्याधीरामुदाहरति । लीलाऽलिपुञ्जइति । का चिन्नायिका साऽऽगसं प्रेयांसमभि-

लीलाऽलीति । भवदङ्गसौरभलोभेन चपलाऽलिसमूहयुते । यद्वा त्वदागमनकाङ्क्षया चपलः आलीनां त्वन्नायिकासखीनां त्वत्सखीनामथ वा समूहो यस्मिन् । तेनाऽतित्वरितगमनात् श्रमाऽतिशयः । नायकसम्बोधनाऽकरणेन कोपाऽतिशयः । निकुञ्जे लतापिहितप्रदेशे । तेन जनाऽनवलोकनीयतया निःशङ्कबहलकेलिविधानात् स्वेदातिश-

देहे समीहे भवतो विधातुं
धीरं समीरं नलिनीदलेन ॥ १२ ॥

दधाति । लोलाऽलिपुञ्जे लोलाश्चपला: भवदङ्गसौरभलोलुपतयेति भाव: । लोलश्चलसतृष्णयोरिति विश्व: । अलिपुञ्जाः भ्रमरसमूहा: यत्र । अत्र सम्बुद्धिपदाऽनुपादानान्नायिकाया: कोपवत्त्वमावेद्यते । यद्वा लोलेति सम्बुद्धि: । हे चञ्चल सतृष्ण इत्यर्थ: । एवं चञ्चलस्वभावस्य एतादृगनुचितकार्यकारित्वं गुणाऽनभिज्ञत्वं च तवेति द्योत्यते । अलीनां पुञ्जा यत्र पुञ्जपदेन नैविड्यमलिषु, सप्तम्या चाऽलिपुञ्जावियोगाऽभावो निकुञ्जे ध्वन्यते । यद्वा आलिपुञ्जे आलीनां सखीनां विरोधिलक्षणया असखीनां सपत्नीनां पुञ्जो यत्रेत्यर्थ: । अथवा अलीनां पुञ्ज इति अलिपुञ्ज: तस्मिन् । ध्वान्तराशिरूपे इत्यर्थ: । एवञ्चाऽन्यजनाऽनवलोकनीयतया निःशङ्कबहुलकेलिविधानात् खेदाऽतिशयो व्यज्यते । निकुञ्जे लतापिहितप्रदेशे व्रजत: तन्निवारणपुरःसरं वेगेन गच्छत: । अत एव स्फारा: बहुला: श्रमवारिधारा: श्रमेणाऽऽयासेन वारिधारा: स्वेदधारा: बभूवु: सम्पन्ना: । अतो भवत: तव । एकवचनेनाऽनादरो ध्वन्यते । देहे शरीरे । नलिनीदलेन कमलिनीपत्रेण । तस्याऽतिशीतलत्वादिति भाव: । धीरं तत्परिहारसमर्थं स-

य: । भवत इत्येकवचनेनाऽनादर: । देहे तस्य पराधीनत्वेन निरपराधत्वात् । न तु त्वयि । नलिनीदलेन,शीतलत्वात् । तालेन व्यजनेन वेति नोक्तम् । जारवृत्तान्तवतो नायिकासम्बन्धिपदार्थदानस्यैवोचितत्वात् ॥ १२ ॥

मीरं मन्दमिति वा । सम्यगीरयतीति समीरो वायुस्तम् । एवं चैतत्समये एतस्यैव युक्तत्वमिति भावः । विधातुं कर्त्तुम् । समीहे व्यापारयामि । अत्र लोलालिपुञ्जइति विशेषणोपादानाद् नायकविलोकनविलोलविलोचननायिकासमूहत्वं ध्वन्यते । तेन चाऽऽकर्षकत्वमावेद्यते । एवं चञ्चलाऽलिबाधाभवननिकुञ्जगमनखेदस्य भवानेव सह इति काकूत्थापिता विलासिनीतादृशनयनाऽऽसक्तस्य तत्समूहकेलिप्रयासेन तव स्वेदोद्गमः सम्पन्नो न तु निकुञ्जगमनेनेति वक्रोक्तिः । यद्वा लोलाऽलिपुञ्जे निकुञ्जइति पदद्वयोपादानाद्भ्रमद्भ्रमरसमूहपक्षलक्षजातवातशीतलतरणिकिरणसरणिशून्यप्रदेशविशेष व्रजत इति काक्वोत्थापिता प्रमदाकेलिकलाकलापाविकलतया तव स्वेदधाराः सञ्जाता न तु निकुञ्जगमनेनेति वक्रोक्तिः । तया च साऽपराधत्वप्रकाशनमिसलङ्कारेण कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नोऽर्थशक्त्युद्भवो वस्तुध्वनिः । न चात्राऽनुपयुज्यमानाऽर्थतया लक्षणामूलध्वनित्वमिति वाच्यम् । लोलाऽलिवारणव्याकुलतया पिहितप्रदेशस्खलद्गत्या अपि स्वेदोद्गमं प्रत्युपयुज्यमानत्वाद् । अत्र

श्लोकस्याऽर्द्धे तदर्द्धे वा वर्णाऽऽवृत्तिर्यदि ध्रुवा ।
तदा मता मतिमतां स्फुटाऽनुप्रासता सताम् ॥

इति लक्ष्यलक्षितस्फुटाऽनुप्रासाऽनुप्राणिता वक्रोक्तिरलङ्कारः । "वक्रोक्तिः श्लेषकाकुभ्यां वाच्याऽर्थान्तरकल्पन"मिति तल्लक्षणाद् ।

कर्णौ ध्वजौ दण्डमृगेन्द्रहारा
भवन्ति यस्याश्चरणे समस्ते ।
तामिन्द्रवज्रामतिमात्रकान्तां
भोगीन्द्रवक्त्रां भ्रमरं दधानाम् ॥
इति लक्षणाद् इन्द्रवज्रावृत्तम् ॥ १२ ॥

मध्या ऽधीरा यथा ।

जातस्ते निशि जागरो मम पुनर्नेत्राऽम्बुजे शोणिमा
निष्पीतं भवता मधु प्रवितितं व्याघूर्णितं मे मनः ।
भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं त्वया श्रीफलं
पञ्चेषुः पुनरेष मां हुतवहक्रूरैः शरैः कृन्तति ॥ १३ ॥

मध्यामधीरामुदाहरति जातस्ते इति । का चित्साऽपराधं पतिमाह । अतिचित्रमेतत्, ते तव । एकवचनात्परुषत्वमभिव्यज्यते। अत्रापि सम्बोधनपदाऽनुपादानप्रयोजनं पूर्ववदेव। निशि रात्रौ जागरो निद्राभङ्गो जातः अजनि । कान्तान्तरक्रीडावशादिति भावः। मम पुनर्नेत्राऽम्बुजे नेत्रकमले। अम्बुजपदेन जलजन्यत्वात् तत्सम्बन्धितया रुदितमभिव्यज्यते । एकवचनेन दृशि त्वदागमनमार्गविलोकनप्रवणतया ऽनन्यव्यापारतया एकरूपत्वत्वं तेन चाऽऽसन्ताऽऽसक्तिर्ध्वन्यते । शोणिमा शोणस्य भावः शोणिमा रक्ततेत्यर्थः । यस्य जागरस्तन्नेत्रे एव रक्तत्वमुचितम् इह तु विपरीतमिति चित्रम् इति भावः।

जात इति । जागरः । मदन्यनायिकारतिवशात् । शोणिमा तदसहनजन्याऽमर्षेणा । आघूर्णितं भ्रान्तम् । तेनैव श्रीफलं बिल्वफलं तत्सदृशं मदन्यस्याः कुचलक्षणम । यद्वा श्रियस्तदीययौवनसम्पत्त्यादेः फलं सम्भोगरूपम । एवञ्च कामनिकेतनायास्तस्याः फलं त्वया गृहीतं तत्कोपेन कामो मां प्रहरतीति चित्रम । चौरस्यैव ताडनौचित्यादिति भावः। यद्वा मदनस्य कुसुमसायकतया स्वयं फलं लब्ध्वा ऽहं कुसुमैः प्रतारित इति भावः । भ्राम्यद्भृङ्गघने इत्यनेन तस्याऽनेकरागित्वम् । इदमेव च पूर्वोदाहरणे लोलालिपुञ्जे इत्यस्य ॥ १३॥

तथा भवता त्वया प्रवितनम् बहु मधु मद्यं निपीतम् । पीतमिति कर्मणि क्तः । घुमास्थेतीत्वम् । अन्यथा सहेसर्थः । मे पुनर्मनः मम हृदयं व्याघूर्णितम् अतिशयेन भ्रान्तम् । अत्रापि विचित्रार्थः पूर्ववत् । यद्वा प्रविततं महदपि मनः व्याघूर्णितम् । एवं चाऽपराधाऽऽधिक्यमावेद्यते । प्रविततं व्याघूर्णितमित्यपि केचित् । तथा भ्राम्यद्भृङ्गघने भ्राम्यन्तश्चपलाः । वा भ्राशेति श्यन् । शमामष्टानामिति दीर्घः । भृङ्गाः भ्रमराः तैर्घने निविडे निकुञ्जभवने लतापिहितोदरसदने । त्वया श्रीफलम् बिल्वफलम् । बिल्वे शाडिल्यशैलूषौ मालूरश्रीफलावपीत्यमरः । श्रीफलस्याऽवयवः फलमित्युत्पन्नस्याऽवयवे च प्राण्योषधिवृक्षेभ्य इत्यणः फले लुगिति लुक् । अत्र भ्राम्यद्भृङ्गघने श्रीफलमिति च वाच्याऽर्थस्य विवक्षिताऽनुपयुज्यमानत्वात्सादृश्यसम्बन्धेन विलोललोचनकामिनीसमूहकुचलक्षणाऽर्थान्तरे सङ्क्रमणादविवक्षितवाच्यो लक्षणामूलो ध्वनिः । उक्तं च ।

अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ ।

अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥ इति ।

एवं च चञ्चललोचनाकुचकलशः प्राप्त इति व्यज्यते । यद्वा श्रियो यौवनादिलक्ष्म्याः फलं तत्सम्भोगादिन लब्ध प्राप्तम् । न तु मश्लेषेण अश्रीफल लब्धमित्यपि परुषवचनमभिव्यज्यते । एष पुरोवर्ती । एवं च दुष्परिहरत्वं ध्वन्यते । पञ्चेषुः । पञ्च इषवो ऽस्येति । "अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः" इति । यद्वा मोहनशोषणाद्य इति । मां पुनः बहुतरमतिशयेन क्रूरैररुन्तुदैः शरैर्बाणैः । एवं च यत्राऽमर्मभेदी अनतिशयेनापि दत्तो बाणः प्रबलया सोढुमशक्यः किं पुनरेतादृश इति भावः ।

मध्या धीराऽधीरा यथा ।

कान्ताऽनुरागचतुरोसि मनोहरो ऽसि
योग्यो ऽसि किं च नवयौवनभूषितो ऽसि ।

कृन्तति । भिनत्तीत्यर्थः । येन कनककलशादिनिध्याविकं लभ्यते न निवेश्यते च राज्ञे तस्य राज्ञा शरैर्भेदनं क्रियते इह तु त्वया तल्लब्धं मम च शरैर्भेदनमिति वैपरीत्यं चित्रमिति भावः । यद्वा त्वया भ्रमद्भ्रमरयामिककुलसंकुले मदनमही-पतिसदननिकुञ्जे ऽनर्घ्यं फलमपहृतं मां तु क्रूरशरैर्भिनत्ति म-दनमहीपतिः । एवं च यस्यैवाऽपराधस्तस्यैव दण्डविधानमिति नीतिरीतित्यागस्तस्येति चित्रमिति भावः । अत्रैकत्र जागरा-दिकारणाऽकथनेपि नेत्राऽरुणिमादिकार्यकथनादन्यत्र जागरा-दिकारणकथनेपि कार्याऽकथनात् "क्रियायाः प्रतिषेधेपि फलव्य-क्तिर्विभावना" "विशेषोक्तिरखण्डेषु कारणेषु फलाऽवच" इति लक्षणलक्षिताभ्यां विभावनाविशेषोक्तिभ्यां प्रागुक्तलक्षणाभ्यां रूपकाऽनुप्रासाभ्यां च संसृष्टो विरोधाऽलङ्कारः । उक्तं च । "विरोधः सो ऽविरोधेपि विरुद्धत्वेन यद्वच" इति । एवं चाऽत्र विरोधाऽलङ्कारेण प्रियाऽपराधप्रकाशलक्षणः कविनिबद्धवक्तृ-प्रौढोक्तिनिष्पन्नवस्तुध्वनिः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

मध्यां धीराऽधीरामुदाहरति । कान्ताऽनुरागेति । का चि-त्साऽपराधं प्रत्याह त्वं कान्तानुरागचतुरोसि कान्तायाः कमनी-

कान्ताऽनुरागेति । कान्ताविषयकाऽनुरागोत्पादनचतुरोसि । न तु प्रियाऽनिष्टचतुरोसीत्यादि । यद्वा कान्त न तु प्रिय । अनुरागे जनयितव्ये चतुरोसि । अनुरागवती मामीदृशकार्यकारितया ऽननु-

इत्थं निगद्य सुदृशा वदने प्रियस्य
निःश्वस्य बाष्पलुलिता निहिता दृगन्ताः ॥ १४ ॥

यद्रूपत्वेनाऽभिमताया इष्टाया इति यावत् । न तु परिणीतायाः । अनुरागः अनुरञ्जनं तत्र चतुरोसि । यामिच्छाविषयीकरोषि तस्याः स्वस्मिन्नासक्तिविधाननिदानचातुर्यवानसि । यद्वा कान्तायामनुरागस्तत्र चतुरोसि । तस्यां स्वविषयकाऽनुरागहेतुभूतनानाकलाकलापवानसीत्यर्थः । सम्बुद्धिपदाऽनुपादानफलं प्राग्वत् । यद्वा कान्त इति सम्बुद्धिः । हे कान्त न तु प्रियतम । अनुरागस्तत्र चतुरोसि । अनुरागे अर्थाज्जनयितव्ये चतुरो ऽसि । अनुरागवर्ती मामीदृशकार्यकारितया अननुरागवर्तीं करोषीति काका वक्रोक्तिः । अथ वा अनुरागविषयकज्ञानवानसि । तथा च स्वविषयकाऽनुरागरहितायामपि तस्यां स्वविषयकाऽनुरागं मन्यमानो ऽनुरागभाग् भवसीति तिर्यग्जातितुल्य इति काका वक्रोक्तिः । न केवल तदनुरञ्जक चातुर्यमात्रमपि तु अन्यदपीत्याह । मनोहरोसि । रमणीयोसि । न केवलमेतद् द्वयमेव तदनुरञ्जकम् अपि तु अन्यदपीत्याह योग्योसि । ये एव कान्ताऽनुरागचातुर्यादयो गुणाः

रक्तां करोषि इति काका वक्रोक्तिरियम् । न केवलं तदनुरञ्जकं चातुर्यमात्रं किं त्वन्यदपीत्याह । मनोहर इत्यादि । योग्य इत्यनेनाऽनुरक्तायां मय्यनुराग न वहसि विपरीतलक्षणया ऽयोग्योसीति पदयत्वागमिव्यज्यते । नाथोसीति पाठे प्रभुरसि न किं चिद्वक्तुमिति भावः । न तु प्रियो ऽसीति तात्पर्यम् । नवयौवनेति । न तु श्रुतविनयादिभूषितो ऽसि इति तात्पर्यम् । प्रियस्य प्राक् प्रियत्वेनाऽभिमतस्येत्यर्थः ॥ १४ ॥

प्रौढा धीरा यथा।

नो तल्पं भजसे न जल्पसि सुधाधाराऽनुकारा गिरो
दृक्पातं कुरुषे न वा परिजने कोपप्रकाशच्छलात्।
इत्थं केतकगर्भगौरि दयिते कोपस्य सङ्गोपनं
तत्स्यादेव न चेत्पुनः सहचरी कुर्वीत साचि स्मितम्॥ १५॥

तस्याः ते त्वय्यपीति समगुणतया तद्योग्योसि। त्वमयोग्योमीति वक्रोक्तिः। अनुरागवत्यपि मादृशे जने ऽनुरागाऽभावमाहमीति काका परुषवागभिव्यज्यते। नाथोसीति पाठे प्रभुरमीत्यर्थः। तया चाऽनुचितकार्यकारित्वेप्यवर्जनीयत्वं द्योत्यते। न केवलमेतान्येव तद्योग्यत्वे प्रयोजकानि अपि तु अन्यदपीत्याह। किं च नवयौवनभूषितोसि नवयौवनेनाऽभिनवोन्मादशालिवयोवस्थाविशेषेण भूषितोसि अलंकृतोसि। केवलं यौवनमेव तवाऽलङ्कारकं न श्रुतविनयादीनि वक्रोक्तिः। सुदृशा नायिकया। इत्थम् एवंप्रकारेणोक्त्वा निःश्वस्य निःश्वासमुत्सृज्य। दुःखोद्रेकवशादनिवारणीयत्वाच्चेति भावः। प्रियस्य भर्त्तुर्वदने बाष्पलुलिताः पूर्णबाष्पाः दृगन्ताः दृक्प्रान्ताः निहिताः प्रेरिताः वसन्ततिलकावृत्तम्। अत्रापि पूर्वश्लोकवद्ध्वनिरवगन्तव्यः। उक्तलक्षणाऽनुप्रासाऽनुप्राणितो वक्रोक्तिरलङ्कारः। लक्षणं तूक्तम्। एतेषूदाहरणेषु मध्यात्वमङ्गतिश्चिन्त्या॥ १४॥

कान्तो नायिकामाह नो तल्पमिति। परिजनक्रोधप्रकाशच्छलादिति सर्वत्राऽन्वेति। सर्वक्रियासु इत्थं क्रोधप्रकाशच्छलेन तल्पभजनाऽभावादिभिः। सहचरी सार्वदिकसान्निध्यशालिनी सखी। साचि वक्रीकृतग्रीवम्॥ १५॥

लब्धावसरत्वात्प्रगल्भां धीरामुदाहरति नो तल्पमिति । का चित्सखी नायिकां प्रति वदति हे केतकगर्भगौरि । केतकं केतकीकुसुमं तस्य गर्भः । तस्याऽतिगौरत्वादिति भावः । तस्माद् गौरि ततोऽधिकतरगौरवर्णशालिनि । गर्भपदेन सखीष्वपि कोपगोपनकारितया दुर्ज्ञेयहृदयत्वमावेद्यते । तल्पं पर्यङ्कं नो भजसे सनाथयसि । न केवलं प्रियतमाऽधिष्ठिततल्पसमीपाऽनवस्थितिः अपि तु दूरतोपि सुधाधाराऽनुकाराः पीयूषसदृशाः । अथ वा सुधायाः आधारः समुद्र इत्यर्थः । तदाकाराः । लसत्सुरसवर्णावलीरित्यर्थः । अथ वा गम्भीराः गिरः वचो न जल्पसि वदसि । एवं च न यत्र संलापोपि तत्र काऽऽलिङ्गनचुम्बनादीति रतौदास्यमावेद्यते । आस्तां संलापः अपि तु तं नावलोकयस्यपीत्याह दृक्पातं नेत्रनिपातनमपि न वा कुरुषे । बुद्धिपुरःसरविलोकनं दूरपराहतमिति भावः । इत्थममुना प्रकारेण दयिते कोपस्य प्रियतमविषयकक्रोधस्य परिजनक्रोधस्य प्रकाशच्छलान्निकटवर्तिस्वजनविषयककोपप्रदर्शनमिषात् । वस्तुगत्या स्वाधीनजने न कोपि कोप इति भावः । प्रकाशस्य तेजोधर्मत्वात् कोपे बाधात् तीव्रत्वं लक्ष्यते । तेन च दुःसहत्वं ध्वन्यते । यत्प्रच्छोपनमाच्छादनमपि तस्मिन् वा तव तदा स्यात् चेद्यदि पुनः सहचरी सह सार्द्धं चरति गच्छति अहर्निशं त्वत्समागमवतीत्यर्थः । पचादिषु चरेष्टित्करणान्ङीप् । अत एव आचरतीति पचादिषु चरेष्टित्वादिति वामनोपि । इत्थं च इयं त्वदीयान्तिकचरीतिज्ञेति भावः । एवं चैतस्याः स्मितेन कोपगोपने व्यर्थत्वाऽन्यथात्वनिर्णयो ऽस्माकमिति ध्वन्यते । यत्तु सहचरी सखीत्याहुस्तन्न । सख्याः कथनोत्तरमेव ज्ञानं सहचर्यास्त्वकथने-

प्रौढा अधीरा यथा ।

प्रतिफलमवलोक्य स्वीयमिन्दोः कलायां
हरशिरसि परस्या वासमाशङ्कमाना ।
गिरिशमचलकन्या तर्जयामास कम्प-
प्रचलवलयचञ्चत्कान्तिभाजा करेण ॥ १६ ॥

पीति तयोर्भेदात् । साचि वक्रं वदनं विन्यस्येत्यर्थः । साचि-पदेन नायकं प्रति नायिकाकोपगोपनकारित्वं द्योत्यते । स्मितं हास्यविशेषम् । एकवचनेनाऽल्पत्वं तेन नायिकातः सहचर्या भीतिरथ वा नायिकाहृद्गतज्ञानसङ्गोपनं व्यज्यते । कुर्वीत वि-दधीत । इत्थमौदास्यशालिन्यास्तत्र प्रियविहिताऽपराधजनित-कोपस्य अन्यनिमित्तजत्वप्रदर्शनमिषेणाऽऽच्छादनं तदा स्यात् यदि त्वद्रहस्यविज्ञेयं प्रियविषयककोप एव एतस्या नाऽन्य-विषयक इति सूचकं हसितं नाऽकरिष्यत् । एवं चाऽधुना त्वत्प्रियतमेनाप्येतत् ज्ञातम् अतस्त्वत्प्रसादसम्पादनाय स ए-वात्राऽऽयातीत्यनुमोदस्वाऽस्माकमितो गमनायेति भावः । यद्वा दयिते प्रियतमे मयि कोपगोपनं तदा स्यादित्यादि नायको-क्तिरेव । दयितपदं कोपस्यौचित्यं ध्वनयति । केचित्तु द-यिते इति सम्बुद्धिपदं मत्वा नायकोक्तिरियमित्याहुः । शार्दू-लविक्रीडितं वृत्तम् ॥ १५ ॥

प्रतिफलमिति । प्रतिबिम्बमित्यर्थः । अचलकन्यात्वेन जडत्वम् अविचार्यकार्यकारित्वञ्च । कम्पेति । कम्पचञ्चलकङ्कणप्रसर्पत्का-न्तिभाजा करेणेत्यनेन नानाविधमणिमरीचिनिचयभास्वरकङ्कणग-णक्कणत्करजन्यतया तर्जनस्याऽतिभीतिप्रदत्वम् ॥ १६ ॥

प्रौढा धीराऽधीरा यथा ।

तल्पोपान्तमुपेयुषि प्रियतमे वक्रीकृतग्रीवया
काकुव्याकुलवाचि साचिहसितस्फूर्जत्कपोलश्रिया ।

प्रौढामधीरामुदाहरति प्रतिफलमिति । हरशिरसि शिवमस्तके इन्दोश्चन्द्रस्य कलायां शकले स्वीयमात्मीयं प्रतिफलं प्रतिबिम्बम् अवलोक्य दृष्ट्वा । न तु विचार्येत्यर्थः । तस्याऽतिस्वच्छत्वादिति भावः । परस्या अन्यस्याः वास स्थितिम् । न त्वागमनमात्रम् । आशङ्कमाना वितर्कयन्ती । स्वप्रतिबिम्बाऽनभिज्ञेति भावः । अत एव अचलकन्या पर्वतपुत्री पार्वती । यद्वा कन्येव कन्या । एवमविचार्यकारित्वं ध्वन्यते । गिरिशं गिरिं पर्वतं श्यति उपभोगेन तनूकरोतीति गिरिशस्तम् । आतो ऽनुपसर्गे इति कः । गिरिरस्यास्तीति गिरिश इति वा लोमादित्वाच्छः । शिवं कम्पप्रचलवलयचञ्चत्कान्तिभाजा । कम्पेन । कोपावेशादिति भावः । प्रचलानि अतिशयितचाञ्चल्यभाञ्जि यानि वलयानि कङ्कणानि तेषां चञ्चन्त्यः प्रसरन्त्यः । आश्रयचाञ्चल्यादिति भावः । याः कान्तयः नानाविधमणिमरीचयः । तद्भाजा तद्युक्तेन करेण हस्तेन तर्जयामास निरभर्त्सयत् । चक्षिङो ङित्त्वेनाऽनुदात्तेत्त्वनिमित्तमात्मनेपदमनित्यमिति तर्जयतेः परस्मैपदम् । नानाविधमणिमरीचिनिचयभास्वरकङ्कणक्काणवत्करजन्यतया तर्जनस्याऽतिभीतिप्रदत्वं ध्वन्यते । अत्र संशयो भ्रान्तिर्वा ऽलङ्कारः । मालिनीवृत्तम् ॥१८॥

तल्पोपान्तं न तु तल्पमुपेयुषि प्राप्तवति न तूपविष्टे । तेन दूरतो दर्शनेनैव तत्कृताऽपराधस्मृतिर्व्यज्यते । मयीयं कुपितेति भिया व्याकुला सतीति वक्तुमशक्या काकुर्ध्वनिविकारवती वाक् यस्य ता-

हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालित-
प्रोष्ठीपृष्ठमयूखमांसलरुचो विस्फारिता दृष्टयः ॥१७॥

प्रौढां धीराऽधीरामुदाहरति तल्पोपान्तमिति । का चित्सखी नायिकावृत्तान्तं स्वमर्खीं प्रति वदति । सखीति सम्बुद्धिरध्याहर्तव्या । प्रियतमे अत्यन्तं प्रेमास्पदे नायके । प्रियतमपदेनाऽवर्जनीयत्वमाविष्यते । तल्पोपान्तम् पर्यङ्कसमीपदेशं न तु पर्यङ्कमुपेयुषि प्राप्तवति सति न तूपविष्टे । एवं च दूरत एव दर्शनसमयएव तत्कृताऽपराधस्मृतिरभिव्यज्यते । वक्रीकृतग्रीवया वक्रीकृता तिर्यग्विहिता ग्रीवा मन्या यया तया । साऽपराधस्याऽस्य शठस्याऽभिमुखमवस्थितिरपि नोचितेति कोपेनेति भावः । तथा प्रियतमे काकुव्याकुलवाचि सति । काकुर्ध्वनिविकारः । यदियम् एतादृशी लक्ष्यते अतो मत्कृताऽपराधज्ञानात्कुपितेति भियेति भावः । अत एव व्याकुला झटिति वक्तुमशक्या । अन्यथावादादिरचनयेति भावः । वाक् यस्य तस्मिन्सतीत्यर्थः । साचिहसितस्फूर्जत्कपोलश्रिया साचि तिर्यग्भूत्वा कथमयं सापराधोपि वाचालतया आत्मानमनपराधिनमिव दर्शयतीति विस्मयेन यद्धसितं न तु तोषेण । अग्रे

दृशि सति साचि तिर्यग्भूत्वा कथमसौ सापराधो ऽपि वाचालतया ऽऽत्मानमनपराधमिव दर्शयतीति विस्मयेन यद्धसितं तेन रोषेण स्फूर्जन्ती अतिशयिता कपोलश्रीर्यस्याः । तथा ततो हासेन प्रसादमनुमाय हस्तन्यस्तकरे सति । प्रोष्ठी शफरी । लाक्षारसक्षालितत्वेनाऽऽरुण्याऽतिशयः । क्षालितं लिप्तमित्यर्थः । अत्र प्रोष्ठीपदेन चञ्चलत्वं काठिनत्वञ्च । पृष्ठपदेन यत्सापराधोपि प्रणामादिमन्तरेणैव करग्रहणं करोतीति अरुणचञ्चलकाठिनदृष्टिपातः ॥ १७ ॥

अन्यस्याः सविधं समेत्य निभृतं व्यालोलहस्ताङ्गुलि-
व्यापारैर्वसनाञ्चलञ्चपलयन् स्वापच्युतिं क्लृप्तवान्॥ १८॥

खी सखीं प्रति वदति । हे सखि स दक्षिणनायकः कोपवशा-
त्तस्नाऽनपेक्षितत्वेन सरोरुहदृशोः कमलनयनयोर्नायिकयोः । सरोरुहपदेन विशालत्वं दृक्पदेन विरेचकत्वं व्यज्यते । एक-
स्मिन् शयने तल्पे नायककृततुल्याऽपराधतया सञ्जातमैत्रीक-

योर्नायिकयोः नायककृततुल्याऽपराधतया सञ्जातमैत्रीकत्वादिति भाव । निद्रां विधाय नायकस्य दर्शन मा भूदिति विधाय पल्लवितः आपादतलमस्तकं विस्तारितो ऽवगुण्ठनपटः प्रच्छादनपटो यया ता-मेकाम । इदमेव कोपचिह्नम् । पल्लवितपदेन तदीयकरस्पर्शाऽसहिष्णुत्वम् । तेन च रतावौदासीन्यम् । उत्कन्धर. । उद्ग्रीवः । न तूत्थित. । कदा चिदियं द्रक्ष्यतीति भियति भावः । दृष्टवान् तदीयनिद्रानिर्णयाय । ततो ऽन्यस्याः निकटं प्राप्य निभृतं गुप्तम । तदीयोत्तरीयवसनोऽन्तरितनतया व्यालोलाश्चलिता या हस्ताङ्गुलयो नायककरयोगात् अङ्गुलयो न तु हस्त । कङ्कणझणत्कारेण कनिष्ठायाः स्वापच्युतिर्मा भूदिति भियेत्यर्थ. । तासां व्यापारै पुनः पुनर्नायककर्तृकचालनै. । एकव्यापारेण स्वापच्युतावपि नेत्रोन्मीलन नाऽकरोदिति पुन पुनस्तत्करणम् । तेन रत्युदासीनत्वं ध्वनितम् । पल्लविताऽवगुण्ठनपटामिति । अस्य अपि विभक्तिभेदेनेत्याहु । एवंभूतैस्तदीयहस्ताङ्गुलिव्यापारैस्तदीयवसनप्रान्तं न तु वसनम् । आकस्मिकवसनाकर्षणं मा भूदिति चपलयन् शिथिलयन् । न तु कर्षन् । तथा सति मधिक एव कोप' स्यात् । यद्वा स्वीयैरेव हस्ताङ्गुलिव्यापारैस्तद्वस्त्रप्रान्तं चपलयन्नित्यर्थ । तथा सति क्लृप्तवान् अकार्षीत् । रिरसयेति भाव । एतच्च क्रीडौत्सुक्याऽभावात् पूर्वार्द्धे स्नेहन्यूनतया कनिष्ठा । उत्तरार्द्धं क्रीडौत्सुक्याज्ज्येष्ठात्वम् ॥ १८ ॥

त्वादिति भावः। निद्रां स्वापं विज्ञाय तयोर्मध्ये एकां पल्लविताऽवगुण्ठनपटां स्वयमेव स्वभावेन यद्वा कृताऽपराधस्य नायकस्य दर्शनं मा भवत्विति बुद्ध्या पल्लवितः आपादतलमस्तकविस्तारितः अवगुण्ठनपटः आच्छादनपटो यया ताम्। अवगुण्ठनपदेनाऽऽच्छादकत्वप्रतिपादनद्वारा व्यङ्ग्यकोपप्रकाशत्वं ध्वन्यते। पल्लवपदेन तदीयकरस्पर्शाऽसहिष्णुत्वमावेद्यते। तेन च रतावुदासीनत्वं व्यज्यते। एतद्रीत्या मध्याप्रगल्भे अत्र वेदितव्ये। इति पृथगनुदाहरणान्न न्यूनत्वशङ्का। उत्कन्धर उद्ग्रीवः न तूत्थितः कदा चिदियं द्रक्ष्यतीति भियेति भावः। दृष्टवानालोकितवान्। ततो ऽन्यस्याः सविधं निकटं समेत्य सम्यक् मन्दपदन्यासेनेति भावः। एत्याऽऽगत्य वसनाञ्चलं वसनप्रान्तं न तु वासः। आकस्मिकवसनसमाकर्षणे संभ्रमो भविष्यतीति धियेति भावः। चपलयन् शिथिलयन्न त्वाकर्षयन्। कुपिताया वसनाञ्चलाऽऽकर्षणे कदा चिदधिक एव कोपः स्यादिति भावः। निभृत गुप्तं तदीयोत्तरीयचमनान्तरिततयेति भावः। व्यालोलाश्चञ्चलाः नायककरयोगादिति भावः। या हस्ताङ्गुलयो न तु हस्तः। अन्यथा कङ्कणरणत्कारेण कनिष्ठायाः स्वापच्युतिर्भविष्यतीति धियेति भावः। तासां व्यापारैश्चेष्टितैः। बहुवचनेनैकतद्व्यापारेण स्वापच्युतावपि न नेत्रोन्मीलनमकरोदिति पुनः पुनस्तत्करणमतो रतावुदासीनत्वं ध्वन्यते। स्वापच्छलेनाऽन्तर्गतकोपसङ्गोपनतया व्यङ्ग्यकोपप्रकाशत्वं व्यज्यते। यद्वा निभृतव्यालोलहस्ताङ्गुलिव्यापारैः न तु निभृतचरणाऽङ्गुलिव्यापारैः। एवं च कनिष्ठादर्शनभियोपवेशनं व्यज्यते। विनीतत्वं वा। वसनाञ्चलं चपलयन्नित्यर्थः। स्वापच्युतिं निद्राभङ्गं क्लृप्तवानकार्षीत्।

अधीरा ज्येष्ठा कनिष्ठा च यथा ।

अन्तः कोपकषायिते प्रियतमे पश्यन् घने कानने
पुष्पस्याऽवचयाय नम्रवदनामेकां समायोजयत् ।

रिरंसयेति भावः । अत्र पूर्वार्द्धे क्रोडौत्सुक्याऽभावान्न्यूनस्नेहवत्त्वेन कनिष्ठात्वम् । उत्तरार्द्धे क्रीडौत्सुक्यात्स्नेहाऽऽधिक्येन ज्येष्ठात्वमित्यवगन्तव्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

अधीराज्येष्ठाकनिष्ठे उदाहरति । अन्तः कोपेति । काचित्सखी स्वसखीं प्राह कोपि चतुरः प्रियतमे नायिके एकस्याः प्रीत्यतिशयाभावात् तमप् अविवक्षितार्थः । वस्तुतो ज्येष्ठातो न्यूनप्रीतिमत्त्वेपि अन्यापेक्षया प्रेमाऽतिशयवत्त्वात् कनिष्ठायामपि न तदर्थबाधः । यद्वा प्रियतमे इति काननविशेषणम् । प्रिये इत्यध्याहारः । कोपकषायिते क्रोधेन कलुषीकृते तत्करोतीति णिजन्तात्कषायशब्दान्निष्ठायां सेटीति णिलोपः । पश्यन् परुषवचनतर्जनताडनात्तयोः कोपं प्रत्यक्षमिवाऽऽकलयन्नित्यर्थः । पुष्पस्येत्येकत्वमविवक्षितम् । अवच-

अन्तरिति । अन्तः कोपकषायिते कलुषीकृते प्रियतमे ज्येष्ठापेक्षया अन्यस्याः प्रियतमत्वाभावे ऽपि नायिकान्तरापेक्षया प्रेमातिशयत्वात् तमप् । यद्वा प्रियतमे इति काननविशेषणं पश्यन् तर्जनताडनात्कोपं प्रत्यक्षमिवाऽऽकलयन् । तयोरेकां स्वेन एव नायकं प्रति कोपाद्धा पुष्पावचयाय तन्निषेण नम्रवदनाम् । घने कानने अन्तर्घनकानननस्थं समायोजयत् प्रमादनादिपूर्वकं प्रेरयत् इत्यर्थः । निविडवननन्यस्थत्वा किमपि स्वचरितं द्रष्टुं न यस्यामिति इक्षेति भावः । दे

अर्धोन्मीलितलोचनाञ्चलचमत्काराऽभिरामाऽननां
स्मेराऽर्धाधरपल्लवां नववधूमन्यां समालिङ्गति ॥१९॥

याय ग्रहणाय नम्रवदनाम् अधःकृतमुखीम् । स्वत एवेति भावः । अथ वा नायकं प्रति कोपादिति भावः । घने निविडे कानने वने । अन्तः अभ्यन्तरे निविडवनमध्ये इत्यर्थः । आदावेव वनं निविडं तत्रापि तन्मध्यप्रविष्टया स्वचरितं किमपि न द्रष्टुं शक्यमिति धियेति भावः । केचित् अन्तः-कोपकषायिते इत्येकपदतया व्याचख्युस्तन्मते ऽधीरात्वप्रतीतिः कथमिति विभाव्यम् । समायोजयत् । सम्यक्तया प्रसादनपुरस्सरमित्यर्थः । अयोजयत् प्रेरयामास । स्वतः पुष्पाऽवचयाय प्रवृत्तायाः केवलविनयपुरःसरं काननमध्ये भूयान् पुष्पसमुदायस्तत्रैव पुष्पाऽवचयं कुर्विति नियोजयामासेति भावः । एवं च नम्रवदनामित्यस्य न वैयर्थ्यशङ्का । ततः अर्द्धोन्मीलितलोचनाञ्चलचमत्काराऽभिरामाऽननाम् अर्द्धं स्वल्पम् उन्मीलिते ये लोचने नेत्रे तयोर्ये अञ्चलचमत्काराः प्रान्तविभ्रमास्तैरभिरामं स्पृहणीयमाननं वदनं यस्यास्ताम् । अर्द्धमुकुलितेयं दृष्टिः ।

तु अन्तःकोपकषायिते इत्येकपद्येन व्याचक्षते तेषामधीरत्वप्रतीतिश्चिन्त्या । अर्द्धोन्मीलितनेत्रयोर्ये प्रान्तचलचमत्कारास्तद्विभ्रमास्तै रमणीयवदनवतीम् । कथमियमनेन प्रतारितेति स्मेरः स्मितवानधरार्द्धमर्द्धाधरपल्लवो यस्यास्ताम् । अनेन सलज्जत्वम् । स्मेरार्द्रेति पाठे स्मेरेणार्द्रः तेन स्मितस्य सुधारूपता । यद्वा स्मेरः आर्द्रश्चाऽधरपल्लवो यस्या इत्यर्थः । तत्राऽऽर्द्रपदेन सुधाद्रवरूपत्वमधरे व्यज्यतइत्याहुः॥१९॥

धीराऽधीरा ज्येष्ठा कनिष्ठा च यथा ।

धैर्य्याऽधैर्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये
रत्नद्वन्द्वमनन्तकान्तिरुचिरं मुष्टिद्वये न्यस्तवान् ।

स्तोकोन्मीलिततारा या मनाक्कुञ्चत्पुटोभया ।
किञ्चिदुत्फुल्लपक्ष्माऽग्रा दृक् सा ऽर्द्धमुकुला मुखे ॥

इति तल्लक्षणात् । स्मेराऽर्धाधरपल्लवाम् अधरस्याऽर्द्धम् अर्धाधरः । अर्द्धं नपुंसकमिति समासः । स एव पल्लव इति रूपकम् । स्मेरः स्मितविकस्वरो ऽर्द्धाधरपल्लवो यस्यास्ताम् । कथमियमनेन प्रतारितेति विस्मयात् स्मितमकरोदिति भावः । कथमियमनभिज्ञा एतत्कृतप्रतारणमपि न जानातीति विस्मयात् स्मितमकरोदिति वा । अथ वा स्मेरम् अर्द्धं यस्य स स्मेरार्द्धः । तथा अधरपल्लवो यस्यास्ताम् इति । स्मेराऽर्द्धपदेन सलज्जत्वमावेद्यते । पल्लवपदेन कोमलत्वमरुणत्वं च ध्वन्यते । स्मेरार्द्राऽधरपल्लवामिति पाठे स्मेरपदस्य धर्मपरतया स्मेरेण स्मितेनेत्यर्थः । एवं च स्मिते ऽमृतरूपत्वं द्योत्यते । स्मेरो विकसितः आर्द्रो ऽधरपल्लवो यस्यास्ताम् । आर्द्रपदेन सुधाद्रवरूपत्वमधरे व्यज्यते इत्यपि कश्चित् । नववधूम् अभिनवयौवनां नायिकाम् । अन्यामपराम् समालिङ्गति । लटा वर्तमानत्वप्रतिपादनेनाऽतिप्रियत्वमालिङ्गने ध्वन्यते । अत्रापि पूर्वोक्तरीत्या ज्येष्ठाकनिष्ठे बोध्ये । शार्दूलविक्रीडितं वृत्तम् ॥१९॥

धैर्याऽधैर्येति । धैर्याऽधैर्याङ्गीकाराऽऽग्रहशीलयोर्मृगदृशो प्रीतये रत्नद्वयं मुष्टिद्वये न्यस्तवान्स्थापितवान् । परं तु प्रथमत आदौ ए-

एकस्याः कलयन् करे प्रथमतो रत्नं परस्याः प्रियो
हस्ताहस्तिमिषात्स्पृशन्कुचतटीमानन्दमाविन्दति ॥२०॥

धीराऽधीराज्येष्ठाकनिष्ठे उदाहरति धैर्याऽधैर्येति। कांचित्सख्याह धैर्याऽधैर्यपरिग्रहग्रहिलयोः धैर्यमधैर्यं च धैर्याऽधैर्ये तयोः परिग्रहो ऽङ्गीकारः। तत्र ग्रहिले आग्रहशीले तयोः तदाग्रहवत्योरित्यर्थः। एणीदृशोर्नायिकयोः। एणीपदं चाञ्चल्यविस्तारवत्त्वादिकं व्यञ्जयति। प्रीतये सन्तोषाय अनन्तकान्तिरुचिरं दीप्तिविशेषसुन्दरम्। रत्नद्वन्द्वं मणिद्वन्द्वम्। द्वयोरश्मजातौ मुक्तादि केपि चेत्यमरः। मुष्टिद्वये बद्धकरद्वये मुष्टिपदेन शीघ्रग्रहणाऽयोग्यत्वं तेन च चिरतरज्येष्ठाकुचकलशसंस्पर्शनाऽऽसक्तिर्व्यज्यते। न्यस्तवान् न्यासीकृतवान्। परं तु प्रथमत आदौ एकस्याः कनिष्ठायाः करे हस्ते रत्नं कलयन् ग्राहयन् परस्या ज्येष्ठाया इत्यर्थः। हस्ताहस्तिमिषात् हस्ते हस्ते गृहीत्वा इति हस्ताहस्ति। तद्व्याजात्। न च समासशास्त्रेणेदं युद्धं प्रवृत्तमित्यस्मिन्नर्थे समासविधानात् प्रकृते च तदभावान्न समास इति वाच्यम्। वादिप्रतिवादिनो युध्यन्तीति प्रयोगाद्वा वाग्युद्धमिव परस्परं हस्तग्रहणे क्रियाप्रतिक्रियाप्रक्षेपरूपयुद्धप्रवृत्तेर्भवत्येव समासः। वस्तुतस्तु "कर्णाकर्णि प्रथित"मित्यादिमहाकविप्रयोगान्न दोषः। कुचतटीं स्तनतटीं स्त्रीलिङ्गनिर्देशेन कामुकस्याऽतिशयितप्रेमास्पदत्वं ध्वन्यते। स्पृ-

कस्याः कनिष्ठाया हस्ते रत्नं कलयन्ग्राहयन् परस्या ज्येष्ठाया हस्ताहस्तिमिषेण क्रीडायामपि युद्धस्यारोपः सपत्नीप्रतारणाय। मुष्टिपदेन शीघ्रग्रहणाऽयोग्यत्वम्। तेन चिरतरहस्तव्यापारध्वनिः॥ २०॥

अप्रकटपरपुरुषाऽनुरागा परकीया । सा च द्विधा । प-

शन् आनन्दं सन्तोषम् आविन्दति प्राप्नोति । अत्र ज्येष्ठाकनिष्ठे स्फुटे एव । उदाहरणत्रये ऽपि छलमलङ्कारः 'छलमन्याऽनुरोधेन मुधा ऽन्यस्य प्रकाशन'मिति तल्लक्षणात् । शार्दूलविक्रीतं वृत्तम् ॥ २० ॥

प्राप्ताऽवसरत्वात् परकीयां लक्षयति अप्रकटेति । परपुरुषविषयाऽस्फुटाऽनुरागवत्त्वं परकीयात्वमित्यर्थः । अप्रकटपदोपादानात् सामान्यवनितायां नाऽतिव्याप्तिः । परपदोपादानान्न मुग्धायाम् । यत्तु अप्रकटितेति पाठः । एवं च

ज्ञाता मैत्री सहजमधुरापातिभिर्लोचनान्तैः
कर्णाकर्णि प्रथितमयशो बन्धुवर्गैरभाणि ।
सत्यप्येवं तदपि न मनाङ् मुञ्चति प्राणनाथं
को जानीते कुवलयदृशः कीदृशः प्रेमबन्धः ॥

इति वर्णनाल्लोकैः परपुरुषाऽनुरागे ज्ञातेपि या स्वयं प्रकटीकरोति अहमस्मिन्नासक्तेति सा परकीयेति । तन्न । अहमस्मिन्नासक्तेति वित्तमात्राऽनुपाधिप्रकटितपरपुरुषाऽनुरागायाः काऽन्तर्भाव इति दोषापत्तेः । कन्यायां तु भाविपुरुषापेक्षया परत्वमवसेयम् । मम तु वित्तमात्राऽनुपाधिकपरपुरुषाऽनुरागवत्त्वं परकीयात्वमिति युक्तमाभाति । एवं च वित्तमात्राऽनुपाधिकप्रकटपरपुरुषाऽनुरागवत्याः काऽन्तर्भाव इति न शङ्काऽवकाशः । तां विभजते सा चेति । ताम-

अप्रकटत्वमस्फुटत्वम् । तच्च विदग्धजनमात्रवेद्यत्वम् । अस्फुटेत्युक्त्या सामान्यवनितायां नाऽतिव्याप्तिः । परपदोपादानान्न मु

रोढा कन्यका च । कन्यकायाः पित्राद्यधीनतया परकीयता । अस्या गुप्तैव सकला चेष्टा ।

परोढा यथा ।

अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोयं वेलादरविदलदेलापरिमलः ।
इयं प्रावृड् धन्या नवजलदविन्यासचतुरा
पराधीनं चेतः सखि किमपि कर्तुं मृगयते ॥ २१ ॥

वाह परोढेत्यादि । परेणाऽन्येनोढा परोढा परिणीता । ननु परस्येयं परकीया इति योगात्परस्वत्ववत्याः परिणीताया एव परकीयात्वमुचितं न त्वपरिणीताया इत्यत आह कन्यकाया इति । पितृस्वत्ववत्तया परकीयात्वं कन्यकाया इति भावः । गुप्ता पराऽनभिलक्षितेत्यर्थः ।

तत्र परोढामुदाहरति । अयमिति । का चिन्नायिका निकुञ्जाद्युद्दीपनविभावदर्शनसमयसञ्जातपरपुरुषाऽनुरागा भङ्गयन्तरेण साकूतं सखीं प्रत्याह हे सखि विश्रम्भपात्रभूते आलि । सखीपदेन रहस्यकथनार्हत्वं ध्वन्यते । अयं निकटवर्त्ती । एवं च गताऽऽगतश्रमाऽभावो व्यज्यते ।

ग्धायां नापि मध्यायाम् ।

अयमिति । पराधीनं मदनाऽधीनम् । यद्वा श्वश्र्वाद्यधीनम् । पराधीनत्वञ्च स्वेच्छाऽविषयाविषयककृतिमत्त्वम् । किमपि प्राणवियोगरूपम् । यद्वा मे चेतः किमपि पराधीनं वस्तु सख्यधीनं वस्तु परपुरुषभोगरूपं कर्तुं मृगयते इत्यर्थः ॥ २१ ॥

रेवाकुञ्जः रेवासम्बन्धी लतादिपिहितप्रदेशः । रेवापदेन शीतलत्वं कुञ्जे दैनन्दिनस्नानाऽऽगमार्हतया ऽन्यथाजनशङ्कापरिहारक्षमत्वं सङ्केतितनायकसुलभाऽऽगमनार्हत्वं च द्योत्यते । कुञ्जपदेनाऽन्याऽनवलोकनीयतया निःशङ्ककेलियोग्यता व्यज्यते । कुसुमशरसेवासमुचितः । मदनस्य सेवा सन्तोषजनक कर्म विविधसुरतमिति यावत् । तत्र समुचितो योग्यः, न तु तूष्णीमवस्थातुं द्रष्टुं वेति भावः । न केवलं कुञ्जमात्रमुद्दीपकमपि त्वन्यदपीत्याह वेलादरविदलदेलापरिमलः । वेलायां यथाकाल परिपक्वतादशायामित्यर्थः । एवं च गन्धसौरभ्य ध्वन्यते । यद्वा वेलायां कुञ्जमर्यादायां तत्प्रान्तइति यावत् । वेलाकालमर्यादयोरपीत्युभयत्राप्यमरः । वेलाशब्दस्योदधिमर्यादायां प्रसिद्धावन्यत्रापि प्रयोगे न दोषः । कोशादौ तथानियमाऽभावात् । दरम् ईषत् विदलन्त्यो विकसन्त्य एलाः एलाफलानि तासां परिमलस्तत्सम्बन्धलब्धः गन्धो यस्मिन् सः । नवेति पाठे नवो ऽभिनवो विदलदेलापरिमलो यत्रेत्यर्थः । यद्वा नूतनाविदलनवत्यो या एलास्तत्परिमलो यस्मिन्सः । एवं च सौगन्ध्याऽतिशयो व्यज्यते । अयं समीपवर्त्तीत्यर्थः । तेनाऽपरिहरणीयत्वं ध्वन्यते । समीरो वायुरपि वरिवर्ति । सम्यगीरयति प्रेरयति काममिति व्युत्पत्त्या मदनबाधाऽतिशयजनकत्व द्योत्यते । एवं च विविधसुरतश्रमाऽपनोदन निपुणसमीपवर्त्तिसमीरवत्तयापि सुरतयोग्यत्व ध्वन्यते कुञ्जे । किं च नवजलदविन्यासचतुरा नवा नूतनाः सजला इति यावत् । ये जलदा. पयोदास्तेषां विन्यासो रचना तत्र चतुरा निपुणा । अत एव धन्या मदुपकारकत्वेन पुण्यवतीयं पुरो विलसन्ती प्रावृट् वर्षासमयोप्यस्ति । एवं चाऽऽगामि-

जलपिच्छिलरेवातटनिकटकुञ्जस्य जनसञ्चाराऽयोग्यतया निःशङ्कं परपुरुषेण सह विहारयोग्यत्वमिति भावः। स्त्रीलिङ्गनिर्देशेन नवजलदविन्यासेन निविडाऽन्धकारसम्पादकतया स्वकर्त्तव्यताऽनुकूलकार्यकारितया सखीत्वमावेद्यते। यद्वा नवजलदसमागमशालिनी इयं प्रावृट् सौभाग्यवती। अहं तु परपुरुषसङ्गतिविहीना अधन्येति ध्वन्यते। अथ वा इयं नवजलदविन्यासचतुरा प्रावृट् धन्या त्वं तु परपुरुषसङ्गतिसंपादनाऽनभिज्ञेति अधन्येति सख्युपालम्भो द्योत्यते। एवंविधोद्दीपनविभावे सति पराधीनं श्वश्र्वाद्यनेकपरतन्त्रं चेतः किमपि विशिष्य वक्तुमशक्यं कर्तुं मृगयते। एवं च चेतो न तूष्णीमवतिष्ठते परतन्त्रता चेयं विदितैव भवत्या तथा च यथा न कस्यापि ज्ञातं भविष्यति तथा कामुको ऽवश्यमानेय इति प्रच्छन्नकामुकाऽभिलाषो व्यज्यते। यद्वा परस्मिन्पुरुषे अधीनं नियन्त्रित परपुरुषाऽनुरागगुणस्यूतं चेतः। ममेति पदाऽनुपादानं दुःखजननोन्मुक्ते मनस्याऽऽत्मीयत्वाऽभावमावेदयति। किमप्यनिर्वचनीयमनुचितं प्राणवियोगं जनयितुं मृगयते विचारयति। एवं च यावत्कालमेतच्चित्तं न तदुत्पादयति तावन्मध्ये परपुरुषसमागमार्थं यत्नं कुरुष्व नो चेदग्रे मम जीवनमसम्भवतीति ध्वन्यते इति सखीं प्रति गुप्तनया स्वहृद्गताऽभिधानम्। लोकं प्रति तु अयं रेवाकुञ्जः 'रेवातीरे तपः कुर्या'दिति स्मरणात् पावनत्वं ध्वन्यते। कुसुमशरसेवासमुचितः कुसुमैः पुष्पैरेव न तु रत्नादिभिः शं सुखं रात्यङ्गीकरोति एतादृशस्य भक्तिमात्रप्रियस्य परमेश्वरस्याऽऽराधनोचितः। तथा वेलानवविदलदेलापरिमलः। वेलायां क्षुद्रोधसमये नवविदलदेलागन्धः समीरोऽप्यस्ति स एव तृप्तिजनको

गुप्ताविदग्धालक्षिताकुलटाऽनुशयानामुदिताप्रभृतीनां

भविष्यति इत्याहारान्तरनिवृत्त्यापि अत्र परमेश्वरभजनं कर्त्तुं शक्यमिति भावः । तथा च नवजलदविन्यासचतुरा धन्या छायासंपादकतया तापसोपकारित्वादिति भावः । माऽवष्य-स्ति । एवंविधपरमेश्वरोपासनाऽनुकूलपदार्थवत्यप्यस्मिन् प्रदेशे पराऽधीनं परः सर्वोत्कृष्टः अस्मदीयप्राणप्रियः तदधीनं त-च्चरणारविन्दासक्त चेतः किमपि कर्त्तुं मृगयते इति काका न किमपि कर्त्तुं मृगयते इत्यर्थः । एवं चाऽस्माकं स्वाम्येवो-पास्य इत्यभिधानाल्लक्षणासङ्गतिः । अत्रैवमुपन्यासरूपवस्तुना परपुरुषप्रच्छन्नाऽनुरागित्वप्रकाशनरूपवस्तुध्वनिः । शिखरि-णीवृत्तम् ।

ध्वजः कर्णो हारो द्विजवरगणस्थो रसयुतः
समुद्रो रत्नं च प्रभवति यदा सप्तदशभिः ।
भुजङ्गेन्द्रोदिष्टा विबुधहृदयाऽऽह्लादजननी
रसै रुद्रैर्यस्यां विरतिरिह सैषा शिखरिणी ॥
इति तल्लक्षणात् ॥ २१ ॥

ननु परकीयाया गुप्तादिभेदसत्त्वात्तदनभिधानान्न्यूनतेत्यत आह गुप्तेति । मतिबुद्धिपूजार्थेभ्यश्चेति चकारस्याऽनुक्तसमुच्चयार्थकत्वाद्वर्त्तमाने कर्तरि क्तः । सुरतगोपनकर्तृत्वं गुप्तात्वम् । पुंश्चलीभावनिपुणत्वं विदग्धात्वम् । जारसमूहगामित्वं

गुप्तेत्यादि । सुरतगोपनकर्तृत्वं गुप्तात्वम् । पुंश्चलीभावनिपुणात्वं विदग्धात्वम् । जारसमूहगामित्वं कुलटात्वम् । दृष्टहानजनिताऽनुतापवत्त्वमनुशयानात्वम् इति । मुदिताप्रभृतीनाम् । प्रभृतीनामन्यासामपीत्यर्थः ।

परकीयायामेवाऽन्तर्भावः । गुप्ता त्रिधा । वृत्तसुरतगोपना वर्त्तिष्यमाणसुरतगोपना वृत्तवर्तिष्यमाणसुरतगोपना च । त्रितयमपि यथा ।

श्वश्रूः कुप्यतु विद्विषन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन्किं तु न मन्दिरे सखि पुनः स्वापो विधेयो मया ।

कुत्सितं लटति वक्तीति व्युत्पत्त्या कुत्सितभाषित्वं वा कुलटात्वम् । इष्टहानिजनिताऽनुतापवत्त्वमनुशयानात्वम् । प्रभृतीनामिति । एतत्प्रकाराणामन्यासामित्यर्थः । तत्पार्थक्येनैषामनुपलम्भादिति भावः । परकीयायामेवेति । परोढोदाहरणोत्तरमेवैतासामुदाहरणोपन्यासात्तदुदाहरणेषु श्वश्र्वादिपदोपादानाच्च । गुप्तां विभजते गुप्तेति । त्रैविध्यमेवाह वृत्ते-त्यादि । वृत्तरतमात्रगोपना वर्त्तिष्यमाणरतमात्रगोपना उभयगोपना चेत्यर्थः ।

त्रयमप्युदाहरति । श्वश्रूरिति । कापि परपुरुषोपभोगचिह्नान्यपलपितुं सखीं प्रत्याह हे सखि । सखीत्वेन स्वचरितकथनार्हत्वेपि तद्गोपनादत्यन्तं गम्भीरत्वमावेद्यते । श्वश्रूर्भर्तृजननी कुप्यतु कुप्यतु । श्वश्रूपदेन तत्कृतकोपसहनयोग्यत्वं स्वस्मिन् ध्वन्यते । किं च सुहृदो मित्राणि विद्विषन्तु मा प्रीणन्तु । सुहृत्पदेन तत्प्रीतिजनककर्मकरणयोग्यत्वेपि स्वयं तदकरणात्तत्सदनस्वापस्याऽतिदुःखप्रदत्वं व्यज्यते । तथा यातरो देवरपत्न्योपि । भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परमिति कोशात् । निन्दन्तु अप-

श्वश्रूरिति । हे सखि । सखीत्वेन स्वचरितसुरतगोपनार्हता । [illegible]पदेन तत्कृतकोपसहनयोग्यत्वम् । सुहृदो मित्राणि । तत्तद्वच-

आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम्॥२२॥

वदन्तु । तद्वचनाऽकरणमेव क्रोधादित्रये हेतुः । किं तु तस्मिन् ताभिरादिष्टे मन्दिरे सद्मनि पुनः अन्यवारं स्वापो निद्रा नैव विधेयः । निद्राविघाने निदानमाह । आखोर्मूषकस्य उन्दुरुर्मूषकोऽप्याखुरित्यमरः । एकवचनेनाऽतिदुर्लभतया उड्डीनबाहुल्यमभिव्यज्यते । आक्रमणाय अङ्गीकरणाय जिघांसयेति भावः । कोणकुहरात् गृहैकदेशसङ्कटप्रदेशात् । कुहरपदेन जागराऽवस्थायामपि तत्र स्थिताया अपि मार्जार्या अदर्शनमावेद्यते । तेनाऽनिवारितत्वं च । उत्फालम् उड्डानम् । एकवचनं सजातीयत्वप्रतिपादनद्वारा नखक्षतानां नियतस्थानकत्वं व्यञ्जयति । आतन्वती विस्तारयन्ती । एवमुड्डीनबाहुल्यप्रतिपादनेन नखक्षतबाहुल्यं प्रतिपाद्यते । मार्जारी बिडाली । मार्जारीति

नाऽकरणमेव क्रोधादित्रये हेतुः । स्वापाऽभावे कारणमाह । आखोरिति । आखोरित्यनेनोड्डानबाहुल्यं व्यज्यते । आक्रमणायाऽऽहननाय । कोणकुहरात् अन्यतमसग्रस्तगृहसङ्कीर्णाऽवयवात् । तेन जागराऽवस्थायां विद्यमानायामपि मार्जार्या दर्शनाऽयोग्यत्वम् । उत्फालमुड्डानमातन्वती विस्तारयन्ती । तेनोड्डानबाहुल्येन नखक्षतबाहुल्यम् । मार्जारीति स्त्रीलिङ्गेन परपुरुषकरस्पर्शो नास्तीति स्वस्मिन्सतीत्वम् । तेन गुप्तपरपुरुषाऽनुरागो व्यज्यते । कां कामनिर्वचनीयाम् । पूर्वमज्ञानात् । स्वापकरणेन मार्जारीकृतेयमवस्थेति वृत्तगोपनम् । पुनरपि श्वश्र्वादिनियोगेन करिष्यामि चेदियमेवाऽवस्थेति धर्निष्पादनगोपनम् । तृतीयोऽप्यार्यसमाजग्रस्त इति बोध्यम् । आधमनाऽग्रस्तत्वादेव तृतीयो भेद एव नास्तीत्याहुः ॥ २२ ॥

विदग्धा च द्विविधा। वाग्विदग्धा क्रियाविदग्धा च।
तत्र वाग्विदग्धा यथा।

निविडतमतमालवल्लिवल्ली-
विचकिलराजिविराजितोपकण्ठे।
पथिक समुचितस्तवाऽद्य तीव्रे
सवितरि तत्र सरित्तटे निवासः॥ २३॥

स्त्रीलिङ्गनिर्देशेन परपुरुषकरस्पर्शाऽभावोपदर्शनात् स्वस्मिन् सतीत्वमावेदयति। तेन गुप्तपरपुरुषाऽनुरागवत्त्वं ध्वन्यते। खरैस्तीक्ष्णैः। खरपदं दुःसहत्वं व्यञ्जयति। खरैर्नखरैः नखो ऽस्त्री नखरो ऽस्त्रियामित्यमरः। मे मम कां कां विशिष्य वक्तुमशक्यामित्यर्थः। दुर्दशां विडम्बनां न कृतवती। अपि तु या दुर्दशा कृता सा ते विदितेति भावः। पुनः स्नापो न विधेय इत्यनेनैकदा ऽज्ञानात् स्नापः कृतस्तेनेयमवस्था सञ्जातेति वृत्तरतगोपनात् पुनः श्वश्रूप्रभृतिभिर्बलात्त्वयैव स्नापार्थं प्रेषिता चेत्तर्ह्येवं मे भावीति वर्त्तिष्यमा-

निविडेति। हे पथिक' पान्थत्वेन वासस्थानकथनयोग्यता व्यज्यते। निविडतमा ये तमालास्तान्वल्लन्ते वेष्टयन्ति तमालवल्लिन्यः ताश्च ता वल्लयो लताश्च मल्लिवल्लीपाठे मल्लन्ते शोभन्ते ताश्च ता वल्लयश्चेत्यर्थः। ताश्च विचिकिलवल्लीप्रसूनानि तेषां च राजिभिः विराजितसमीपदेशे सरित्तटे इत्यर्थः। तेनाऽन्यजनाऽनवलोकनीयत्वम् अतिशयोद्दीपकत्वं शीतलत्वं सन्तापहरत्वं च व्यञ्जयति। तत्र प्रसिद्धे। केन पथा गन्तव्यमिति सन्देहो न विधेय इति भावः। तेन तदेव सङ्केतस्थानमिति व्यज्यते॥ २३॥

णरतगोपानात् उभयरतगोपनस्याऽऽर्थसमाजसिद्धत्वादुदाहरण-सङ्गतिः । वस्तुतस्त्वार्थसमाजसिद्धत्वादेव न तृतीयो भेद इत्याहुः । अत्र "व्याजोक्तिः शङ्क्यमानस्य छद्मना वस्तुगोपन"मिति लक्षणलक्षितव्याजोक्तिरूपाऽलङ्कारेण परपुरुषसम्भोगचिह्न-गोपनरूपवस्तुध्वनिः । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

विदग्धां विभजते । विदग्धा चेति । द्वैविध्यमेवाह वागिति ।

प्रथमोद्दिष्टत्वात् वाग्विदग्धामुदाहरति निबिडेति । सङ्केतस्थलमुपदिशन्ती का चित् कं चित्प्रत्याह । हे पथिक पान्थ पथिकपदं वसतिस्थलकथनयोग्यत्व मार्गान्तरवर्तिनदीतीरनि-वासयोग्यत्वं च व्यञ्जयति । सवितरि सूर्ये तीव्रे अतिशयि-ततापकारिणि सति मध्याह्ने इत्यर्थः । एवं चाऽहिमकरखरक-रनिकरभीत्या जनसञ्चारशून्यतया ऽग्रिममार्गस्याऽतिदुर्गम-त्वमावेद्यते । निबिडतमतमालमल्लिवल्लीविचकिलराजिविराजि-तोपकण्ठे । निबिडतमम् अतिशयेन निबिडमिति निबिडतमम् । यद्वा अतिशयेन निबिडा इति निबिडतमाः अतिशयितनैर-न्तर्यशालिन इत्यर्थः । ये तमालाः वृक्षविशेषाः तान् वल्लन्ते वेष्टयन्तीति वल्लयः लताविरयस्मात् णिनिः । वल्लन्तश्च विचकिलाश्च मल्लीप्रभेदो विचकिलः स्मृतो विचकिलो मल्लीप्रभेदे मदे मदनेपि चेति विश्वः । तेषां राजयः श्रेणयस्ताभिर्विराजितो विभूषित उपकण्ठो ऽन्तिकप्रदेशो यस्मिन् उपकण्ठाऽन्तिका-ऽभ्यर्णेत्यमरः । निबिडतमपदमन्यजनाऽनवलोकनीयत्वं व्य-ञ्जयति । वल्लिपदं यत्राऽचेतनयोरपि परस्परमालिङ्गनं तत्र किमु वाच्यं चेतनयोरित्यतिशयितोद्दीपकत्वं नदीतटस्य ध्व-नयति । तत्र मार्गवर्तिनि । यद्वा प्रसिद्धे । एवं च केन पथा कथं वा तत्र गन्तव्यमिति मनसि न विधेयमिति भावः । स-

रित्तटे नदीतीरे। अद्य दिने अद्येत्यावश्यकत्वं द्योतयति। निवासः। निवसतिः। समुचितः। सम्यक् उचितः योग्यः। एव च तत्र वमनावनौचित्यं नाऽऽशङ्कनीयमिति ध्वनयति। तपनखरकरसन्तप्तस्य निबिडच्छायशीतलजलवत्प्रदेशे वसतिरुचितैवेति भावः। एवं च तपनकरसन्तप्तस्य मार्गजन्यश्रमवतः सुखावहवसतिस्थलकथकत्वेन दयाशीलत्वप्रदर्शनाद् गुप्तपरपुरुषाऽनुरागवत्त्वं द्योत्यते। यद्वा विराजित उपकण्ठे इति पदद्वयं च। हे विराजित वर्तमाने क्तः। सर्वाङ्गीणलावण्यशील सुकुमारशरीर पथिक तीव्रे सवितरि निबिडतमतमालप्रोद्वल्लीविचकिलराजि विचकिलै राजते शोभते सत्सूद्विषेति क्विप्। तव सरित्तटे यद्वा उपकण्ठविशेषणम्। एवं च निबिडतमतमालसम्बन्धिविचकिलमालाशालिनीत्यर्थः। निबिडतमतमालसम्बन्धोत्कीर्तनेनाऽम्लानत्वं मालासु तेन च सौगन्ध्याऽतिशयवत्त्वं हृदि ध्वन्यते। उपकण्ठे कण्ठस्य समीपे अर्थान्मम वक्षःस्थले इत्यर्थः। तव निवासो योग्यः। सुकुमारशरीरस्य तीव्रतरतपनतापितस्य मार्गश्रान्तस्य भवतो ऽद्य ग्रीष्मसमये चन्द्रोपलकलशाभ्यामिव पयोधराभ्यामतिशीतलं विचकिलमालासुरभि मम हृदयभूतलमेव तव तापहरणभवनमिति भावः। जनसञ्चारविरहिणि शीतलतरे रत्युचिते नदीतीरे मध्याह्ने मत्प्रतीक्षया स्थेयम्। अहमपि तस्मिन्नेवाऽवसरे समागम्य त्वामतिगाढमालिङ्गयामीति नदीतीरमेव सङ्केतस्थलमिति पथिकं प्रति साऽभिप्रायवचनरचनाविशेषेण वक्तीति वाग्विदग्धेयम्। अत्रैवं वाग्रूपवस्तुना सङ्केतदानरूपवस्तुध्वनिः। न चा"ऽत्राऽसमस्तपदप्राया वैदर्भीरीति"रिति लक्षणलक्षितायाः शृङ्गारोपयोगिन्या वैदर्भीरीतेरनादरा"दोजः का-

क्रियाविदग्धा यथा ।

दासाय भवननाथे वदरीमपनेतुमादिशति ।
हेमन्ते हरिणाक्षी पयसि कुठारं विनिक्षिपति ॥ २४ ॥

न्तिमती गौडी”ति लक्षणलक्षितायाः रौद्ररसोपयोगिन्या गौडीरीतेर्निबन्धनादनौचित्यमिति वाच्यम् । प्रायःपदेन क्वचिद्दीर्घसमासवत्त्वेऽपि तस्याऽनुज्ञानात् । परं तु सुकुमारकठिनवर्णवत्त्वादेवाऽनयोर्भेदः । पुष्पिताग्रावृत्तम् ॥ २३ ॥

क्रियाविदग्धामुदाहरति । दासायेति । का चित्कां चित्प्रत्याह भवननाथे गृहपतौ न तु प्रिये । एवं चैतादृशकर्मकर्तव्यस्यौचित्यं ध्वन्यते । दासाय सेवकाय न त्वन्यस्मै । एवं चाऽवश्यभाविवदरीविच्छेदभिया कुठारगोपनमुचितमिति भावः । बदरीं स्वचौर्यरतस्थानभूतां कर्कन्धूर्बदरी कोलिरित्यमरः । अपनेतुम् आमूलाच्छेत्तुम् आदिशति आज्ञापयति सति हरिणाक्षी चञ्चललोचना सङ्केतभङ्गभियेति भावः । यद्वा कुत्र कुठारस्त्याज्यो यत्र न केनापि ज्ञेय इति स्थलगवेषणार्थमिति भावः । झटिति कुठारदूरीकरणार्थमेवेति भावः । हेमन्तऋतौ तत्र जलस्याऽतिशयितशीतलत्वात् पयसि जलमध्ये न तु तीरे । एवं च दुष्प्रापत्वं व्यज्यते । कुठारं स्वाधितिम् । वद-

दासायेति । भवननाथे न तु स्वनाथे न वा प्रिये बदरीं स्वचौर्यरतस्थानभूतामपनेतुं छेत्तुमादिशति स्वसङ्केतभङ्गभिया कुठारं पयसि निक्षिपति । एवं च कुठाराऽभावान्न तच्छेदनम् । गवेषयन्नपि कुठारं दासो न सम्भावयेत् सम्भाव्यापि शीतभिया तोये करं न निक्षिपेत् तत्कालाऽलाभे कार्यान्तरेण विस्मृतिरेव स्यादिति भाव ॥२४॥

लक्षिता यथा।

यद्भूतं तद्भूतं यद्भूयात्तदपि वा भूयात्।
यद्भवति तद्भवति वा विफलस्तत्र कोऽपि गोपनायासः॥२५॥

रीच्छेदनकारणमिति भावः। द्रुघः कुठारः स्वधितिरित्यमरः। निनिक्षिप्तानि गोपायति। गोपयन्नपि दासो न जले सम्भावयेद् सम्भावयन्नपि शीतकातरतया न करं क्षिपेद् इत्येतत्काला-तिक्रमे कार्यान्तरेण विस्मृतिरेव स्यादिति धिया युक्तमेव तत्र तद्गोपनमिति नूपुरीमिव स्वकार्यस्य साधकतया क्रियाविद-ग्धत्वम्। अत्र च कुठारगोपनवस्तुना स्वचौर्यरतसङ्केतनिकेत-नगोपनरूपवस्तुध्वनिः। उपगीतिच्छन्दः॥ २४॥

लक्षितामुदाहरति यद्भूतमिति। का चित्स्वं प्रति नि-वारणकारिणीमन्यत्र तद्गोपनकारिणीं सखीं प्रत्याह हे सखि यद्भूतम् यज्ज्ञातम्। विचार्याऽविचार्य वा यदनुष्ठितमित्यर्थः। तद्भूतमेव जातमेव। जातस्योपायशतैरप्यनिवर्त्तनीयत्वाद् इति भावः। सबाधकमिदमतो न कर्तव्यमित्यत्राह यद्भूयादिति यदग्रिष्टं भूयादेवं भविष्यत्येव। भाविपदार्थस्य केनापि नि-निवारयितुमशक्यत्वादिति भावः। ननु 'यद्भाव्यं तद् भ-

लक्षिता विदग्धा विदितपरपुरुषाऽनुरागेत्यर्थः।

का चित्स्वसखीं स्वनिवारणकारिणीमन्यत्र तद्गोपनकारिणीं प्रत्याह यद्भूतमिति। यातस्याऽवश्यम्भाविनो निवृत्त्यभावादिति भावः पूर्वार्द्धस्य। नन्वेवं सत्यनिष्टं स्यादत आह यद्भवतीति। को-प्यनिर्वचनीयः। गोपीति पाठे श्रीकृष्णस्य गोपीं प्रति वचनम्॥२५॥

नश्यती'ति न्यायादैवमात्रशरणता नोचितेत्यत आह यद्भवति यदाचर्य्यते तद्भवत्या ऽऽचरितव्यमेवेत्यर्थः ।

अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् ।
आरब्धस्याऽन्तगमनं द्वितीयं बुद्धिलक्षणम् ॥

इति नीतिरीतिनिपुणस्मरणादेतादृशाचरणमेव नारम्भणीयम् । आरब्धे तु नोचितस्त्याग इति भावः । यद्वा भाव्यरिष्टस्याऽवारणीयतया यद्भवति यत्क्रियते तद्भवत्यैव कर्त्तव्यमेवेत्यर्थः । अरिष्टस्याऽवश्यम्भावित्वादेतदनाचरणादाचरणमेव वरमिति भावः । गोपनमपि न कार्यमित्याह । कोपि विशिष्य वक्तुमशक्योपि गोपनायासः गोपनप्रयासः विफलः व्यर्थः । लक्षितत्वादिति भावः । यद्वा यत्कृतं तत्कृतमेव यत्क्रियते तदपि क्रियते एव । यच्च कर्तव्यं तदपि कर्त्तव्यमेव । एवं सति तत्र कश्चिदपि गोपनप्रयासो निरर्थक इत्यर्थः । आयामपदं कर्तव्यतायाः सकललोकप्रथितत्वं व्यनक्ति तच्च लक्षितात्वम् । एवं चैतन्मया न कदापि परित्याज्यमिति व्यज्यते । तेन च कामुकविषयकाऽऽसक्तिविशेषः । अथ वा । विदितनायिकारहस्या वयस्या वक्ति यत्कृतं तत्कृतमेव यत्क्रियेत तत्क्रियते एव यत्कर्तव्यं तत्कर्तव्यमेव । अर्थात्त्वया । एवं च गोपनाऽऽयासो व्यर्थ इत्यर्थः । एवं च सकृदनुष्ठितस्य गोपनं सम्भवति, न सम्भवति सर्वदा ऽनुष्ठीयमानस्येति ध्वन्यते । गोपीति पाठमाश्रित्य कृष्णोक्तिरित्यप्याहुः । अत्र 'नर्मस्फोटस्तु भावानां सूचना या परेङ्गितै'रिति लक्षणलक्षितो ऽनुप्रासाऽनुप्राणितो नर्मस्फोटालङ्कारः । उद्गीतिश्छन्दः । आर्याविपर्यस्तदलत्वात् ॥ २५ ॥

कुलटा यथा।

एते वारिकणान्किरन्ति पुरुषान् वर्षन्ति नाऽम्भोधराः
शैलाः शाद्वलमुद्वमन्ति न सृजन्त्येते पुनर्नायकान्।

कुलटामुदाहरति । एते इति । का चित्स्वैरिणी धातारमुपालभते । एते दृश्यमाना वयोपकारित्वाभिमानिन इति भावः। अम्भोधरा मेघाः अनुपयोगिभारधारका इति भावः। बहुवचनेनैकस्याप्यनुपकारितया तत्समुदायस्याऽप्रयोजकत्वमावेद्यते। एवमग्रेपि। वारिकणान् जलबिन्दून् अस्मदनुपयोगिन इति भावः। किरन्ति विक्षिपन्ति अप्रार्थिता अपि। किरन्तीति पदं हेयत्वं ध्वनयति। नैतदस्मदुपयोगीत्याह पुरुषान् जारान्। पुरुषपदमुपभोगक्षमत्वं ध्वनयति न वर्षन्ति सृजन्ति। क्षेपणक्रियाकरणस्य स्वाभाविकत्वात्तस्याः पुरुषविषयकत्वभावाऽसम्पादनादल्पोपकारित्वस्याप्यभावात् निन्द्यत्वमम्भोधरेषु ध्वन्यते। तेनोपकारहीनाऽम्भोधरजनकतया वेधसोपि तद्व्यज्यते। एवमग्रेपि। तथा शैलाः शिलोच्चयाः कठिनत्वादकारुणिकाः। शाद्वलं तृणम्। उद्वमन्ति प्रकटयन्ति। उद्वमनपदमतिनिन्द्यत्वमावेदयति। नैतदस्मदुपयोगीत्याह। एते शैलाः पुनः नायकान् जारान्। नायकपदं चातुर्यादिगुणवत्त्वं व्यञ्जयति।

एतद्वयोपकारित्वाऽभिमानिनो ऽम्भोधरा अनुपयोगिवारिभारधारकाः वारिकणानस्मदनुपयोगिनः अप्रार्थिता अपि जलं त्यजन्ति न प्रार्थितं पुरुषसमुदायमिति भावः। एवमग्रेपि। पुरुषानिति उपभोगक्षमत्वं व्यज्यते। एवं चाऽनुपकार्यम्भोधरसृष्ट्या विधेरपि निन्दा

त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्
धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम्॥२६॥

न सृजन्त्युत्पादयन्ति । तथा त्रैलोक्ये त्रिषु लोकेषु चतुर्वर्णादित्वात् स्वार्थे ष्यञ् । एवं च भूमिस्थतरूणां पुरुषाऽजनकत्वे प्रार्थ्यमानाः स्वर्गस्थितकल्पपादपा अपि कल्पितफलदानं निजव्रतमपहायाऽस्मदपेक्षितजाररूपफलदानविहीनाः सञ्जाता इति स्वस्याऽतिदुर्दैवतां ध्वनयति । तरवो वृक्षाः ज्ञानहीनाः फलानि सुवते उत्पादयन्ति । सुवते इति पदमनुपयोगित्वमावेदयति । जनान् जारान् जनपद शान्तिरसविमुखत्वं द्योतयति । अतः हे धातः ब्रह्मन् त्वया विश्वसृजा । एवं च को वा ऽन्यस्तिष्ठति समर्थो यं प्रत्युपालम्भ इति भावः । यस्य निखिलकार्यकरणे न कोपि श्रमस्तस्य मदपेक्षितकरणे को वा श्रम इति भावः । कुलटाहेतोः कुलटार्थे किं कृतं न किमपीत्यर्थः । इति कातरमालपामि दीनोपालम्भं वदामीत्यर्थः । एवं च दीनहृदयवाञ्छाविज्ञानमात्रादेव तत्सम्पादनमुचित महतां किं पुनस्तदीरित सम्पादनीयमिति भावः । यद्वा त्वया कुलटार्थे किंकृतं कुत्सितं कृतमित्यर्थः । अम्भोधराद्या न के-

व्यङ्ग्या । शाड्वलं तृणम् । नायकान् चातुर्यादिगुणशालिन । त्रैलोक्यइति स्व स्थितकल्पवृक्षा अप्यस्मदभिलषितफलाऽदातार इति स्वस्याऽतिदुर्दैवता व्यज्यते । धातरित्यनेन यस्य निखिलकार्यकरणेपि न कोपि श्रम तस्य मदभिलषितसम्पादने कथं श्रम इति व्यज्यते । कातरं कृपणम् । किं कुत्सितं मेघादीनामिष्टसम्पादकत्वम् उद्दीपनरूपाऽनिष्टजनकत्वं चेति भावः ॥ २६ ॥

अनुशयाना यथा। वर्तमानस्थानविघटनेन भाविस्थानाऽभावशङ्कया स्वाऽनधिष्ठितसङ्केतस्थलं प्रति भर्तुर्गमनाऽनुमानेनाऽनुशयाना त्रिधा। प्रत्येकमुदाहरणानि।

समुपागतवति चैत्रे निपतितपत्रे लवङ्गलतिकायाः।
सुदृशः कपोलपाली शिव शिव तालीदलद्युतिं लेभे॥२७॥

वलं नायकाऽजनकाः प्रत्युत मदनोद्दीपकजलशीतलनूतनतृणाङ्कुराऽभिनवफलानि जनयन्तीति न केवल निरर्थकत्वमपि तु दुरर्थकत्वमिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २६॥

अनुशयानां विभजते वर्तमानेत्यादि। वर्तमानसङ्केतनिकेतरूपेष्टहानिजनिताऽनुतापवत्त्वमित्यादिलक्षणत्रय वोध्यम्।

आद्यामुदाहरति समुपागतवतीति। का चित् कस्याश्चित् वृत्तं स्वसखीं प्रत्याह लवङ्गलतिकायाः। अनुकम्पया लता लतिकेत्यनुकम्पायां कन्। विगलितदलत्वादिति भावः। अर्थाच्चौर्यरतसङ्केतभूताया इत्यर्थः। यत्तु अल्पा लता लतिकेति व्याख्यानं तत्सङ्केताऽनर्हत्वप्रतिपादनादयुक्तम्। लतैव लतिकेति स्वार्थे एव जात्यभिप्रायकमेकवचनम्। निपतितपत्रे निपतितानि स्वयमेव गलितानि पत्राणि दलानि यस्मिन् तत्र चैत्रे मासीत्यर्थः। स्वसङ्केतनिकेतभञ्जके समुपागतवति प्राप्तवति सति। सुदृशः शोभने दृशौ यस्याः सुष्ठु पश्यतीति वा। एव च समीचीनसङ्केतविचारव्याकुलत्वं द्योत्यते। क-

समुपागतेति। अनुकम्पया लता लतिका तालीदलेति सङ्केतभङ्ग्या उपेतीति भावः॥ २७॥

निद्रालुकेकिमिथुनानि कपोतपोत-
व्याधूतनूतनमहीरुहपल्लवानि ।

पोलपाली गडस्थली । स्त्रीलिङ्गनिर्देशेन सजातीयतया दुःखवत्त्वस्य युक्तत्व ध्वन्यते । शिवाशिवपद मदनबाधानिवारकतया प्रकृतौचित्यमावेदयति । द्विरुक्तिर्दुःखाऽतिशय व्यञ्जयति । तालीदलद्युतिम् । ताली वृक्षविशेषः तस्य दलं नवोदितं पत्रमित्यर्थः । तस्य द्युति पाण्डुरकान्ति लेभे प्राप । लेभे इत्यनेन तत्कान्तिप्राप्तौ श्रमाऽऽयासजन्यत्वं तेनाऽतिविरहकातरत्वं सङ्केतनिकेतभङ्गदुःखेनेति भावः । तालीति स्त्रीलिङ्गनिर्देशात्सजातीयतया द्युतेः शीघ्रप्राप्यत्वं व्यज्यते । यद्वा कामिनीत एव तत्प्राप्त्या सतीत्वं तेन गुप्तपरपुरुषाऽनुरागवत्त्वं द्योत्यते । गीतिश्छन्दः ॥ २७ ॥

द्वितीयामुदाहरति निद्रालुकेकीति । का चित्प्रियवसतिं नीयमानां तत्र चौर्यरतसङ्केतनिकेतनाऽभावशङ्कया व्याकुलां नायिकां समाश्वासयति । हे तन्वि कृशाङ्गि । तन्विपदं चिन्ताऽतिशयं व्यञ्जयति । यतः तत्रापि प्रियवसतावपि निद्रालुकेकिमिथुनानि निद्रालूनि निद्राशीलानि स्पृहिगृहीत्यालुच् । प्रशस्ता केका मयूरवाणी येषाम् । प्रशंसायां णिनिः । तेषां बर्हिणां मिथुनानि स्त्रीपुंद्वन्द्वानि येषु । निद्रालुपदमाश्वस्तत्वं ध्व-

का चित्प्रियवसतिं नीयमानां चौर्यात् सङ्केतस्थानाऽभावशङ्काव्याकुलां नायिकामाह निद्रालुकेकीति । अनेन जनसञ्चारशून्यत्व तेन गुप्तरतयोग्यत्व मिथुनपदेन तयोः परस्परविरहाऽसहिष्णुत्वं तेन च विविधोद्दीपनशालत्वं तेन च नानाविधसुरतौचित्यं ध्वन्यते ।

तत्रापि तन्वि न वनानि कियन्ति सन्ति
खिद्यस्व न प्रियतमस्य गृहं प्रयाहि ॥ २८ ॥

नयति । तच्च जनसञ्चारशून्यत्वम् । तच्च गुप्तरतयोग्यत्वम् । केकिपदं घनतरघनोदयजनकानिविडतमतरुच्छायावत्त्वं व्यञ्जयति । तच्चाऽन्यानवलोकनीयत्वं तदपि निःशङ्ककेलियोग्यत्वम् । मिथुनपदं परस्परविरहाऽसहिष्णुत्वं द्योतयति । तच्च विविधोद्दीपनविभाववत्त्वं तदपि च नानाविधसुरतौचित्यम् । अयं चैतादृग्वने त्वदभिमतो नायको गीतिसरसरतिश्रमपरिहाराय त्वामालिङ्ग्य निद्रां सुखेन करिष्यतीति विवक्षिताऽन्यपरवाच्यो ध्वनिः । तत्र जाराऽमाप्त्या केन सह निःशङ्ककेलिरित्यत्राह कपोतपोतव्याधूतनूतनमहीरुहपल्लवानि । केन मूर्ध्ना पवते विलसतीति कपोतः कलरवः स चाऽसौ पोतश्च पवते विलसतीति पोतः अर्भकः । उपसर्जनत्वाऽविवक्षया कपोतशब्दस्य पूर्वनिपातः । तेन व्याधूताः कम्पिताः नूतना अभिनवा महीरुहपल्लवाः तरुकिसलयानि येषु तानि । कपोतेत्यनेन शिरोधूननपूर्वकसविलासगतिकत्वं व्यज्यते । पोतेत्यनेन चपलविलासित्वं ध्वन्यते । तेन च वारंवाराऽऽगमनयोग्यत्वम् । एवं च तादृशजारविलासित्वम् । कलकण्ठकूजितेन शिरोधूननेन करपल्लवचेष्टया च रमयिष्यतीति

पारावतशिशुभिः कम्पितानि नवतरुकिसलयानि येषु तानि । अनेन नानाविधचपलविलासवत्ता ध्वन्यते इत्याहुः । वस्तुतस्तु निर्जनत्वमेवानेनापि । प्रियतमस्येति गोपनाय आपाततो ऽयमेव त्वां तादृशेषु क्रीडयिष्यतीति भावः ॥ २८ ॥

कर्णकल्पितरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः ।
निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते ॥२९॥

पूर्ववत् ध्वनिः । यद्वा स एव रतावधरदंशनादिना त्वां कम्पितमस्तकां धृतकरकोमलपल्लवां करिष्यतीति पूर्ववत् ध्वनिः । वनानि काननानि कियन्ति कति न सन्ति अपि तु बहूनि सन्ति । अतः । न खिन्नस्व दुःखं मा ऽऽया हि । किं तु प्रियतमस्य प्राणेश्वरस्य जाराऽऽसक्तत्वेन भर्तरि प्रीत्यतिशयाऽभावात् । अल्पाच्चूतरामित्यत्र तरबुक्तमप् स्वार्थे । गृह सदनं प्रयाहि गच्छ । अत्रोक्तलक्षणव्याजोक्तिरूपालङ्कारेण नायिकासङ्केतोपदेशप्रतीतिरूपवस्तुध्वनिः । वसन्ततिलकावृत्तम् ॥२८॥

तृतीयामुदाहरति कर्णकल्पितेति । का चित्कां चित्प्रत्याह कर्णे कल्पितोत्तंसीकृता सङ्केतिततरुतले मया गत्वा परावृत्तमिति राधाप्रत्ययार्थमिति भावः । रसालस्याम्रस्य तस्यैव सङ्केतितत्वादिति भावः । मञ्जरी पुष्पगुच्छविशेषः । तया पिञ्जरीकृतं पिङ्गीकृतम् परागसंसर्गादिति भावः कपोलमण्डलं गण्डस्थलं यस्य सः । कर्णपदं यथेय मञ्जरी केवलं श्रवणयोग्या तथा त्वदुदीरितं केवल श्रवणयोग्यमेव न त्वनुभवयोग्यमिति सङ्केतपालनराहित्यं व्यञ्जयति । कल्पितपदं यथा न

कर्णेति । कर्णाऽवतंसिनाऽऽम्रमञ्जरीपिङ्गलीकृतकपोल । कर्णकल्पितेत्यनेन त्वदुक्त श्रवणयोग्यमेव केवलं न त्वनुभवयोग्यमिति ध्वन्यते । रसालत्वेन स्पृहणीयत्वम् । निष्पतदित्यादिना रुदितनिरीक्षणयो सन्तन्यमानता । सङ्केतिततरुतलगमनज्ञापकमञ्जरीदर्शनेन मयैव तत्र न गतमिति विषादेन रोदनं धारापदेन दुःखाऽतिशय. ॥२९॥

मुदिता यथा ।

कथमपि रसालमञ्जर्याः परागाऽगमस्तथा संस्थापनेन कतिपया-
ऽधिककालावस्थायितया सङ्केतस्याऽतिप्रियत्वं राधायास्तथाऽवि-
धमत्वयोत्पादनस्याऽऽवश्यकत्वं द्योतयति । रसालपद स्पृहणी-
यत्वं ध्वनयति । षष्ठी च विरहकातरत्वं ध्वनयति । मञ्जरीपदेन
परिमलबहुलत्वं व्यज्यते । स्त्रीलिङ्गनिर्देशेन सलिलग्रहणयोग्यत्व-
मात्रेष्यते । पिञ्जरीकृतपदं रसालमञ्जर्याः कर्णसङ्गमशालिन्याः
सामीप्यभावादचेतनस्य गण्डस्यापि पाण्डुरतासञ्जायते किमुत
चेतनस्येति विरहभीरुतामावेदयति । मधुरिपुर्मधोर्दैत्यस्य शत्रुः
कृष्णः । मधुपदमुन्मादकत्वं ध्वनयति तच्च दुराधर्षत्वम् । रिपुप-
दन्तत्संनियोगिकर्तृत्वतया जगद्विदितवैभवत्व व्यञ्जयति । त-
थाऽवश्यग्राह्यदर्शनयोग्यत्वं ध्वनयति । उभाभ्यां च कठि-
नहृदयत्वं तच्च स्वकृतिसञ्जातसङ्केतविघातजनितमन्युतया
दुष्प्रापदर्शनीयत्वं द्योतयति । अत एव निष्पतन्नयनवारि-
धारया निष्पतन्ती निःसरन्ती नयनयोर्नेत्रयोर्वारिधारा जल-
धारा यस्याः सा । सङ्केतिततरुतलगमनज्ञापकमञ्जरीदर्शनेन
मयैव तत्र मन्दभाग्यया न गतमिति विषादेनेति भावः । रा-
धापदेन दुःखाऽतिशयो व्यज्यते । राधया राधयतीति राधा ।
एवं च मधुरिपुसङ्गमैकचित्तत्वं ध्वन्यते । निरीक्ष्यते । अव-
लोक्यते । निरीक्ष्यते इति पद कर्तव्यतामूढत्वं व्यनक्ति ।
रथोद्धता वृत्तम् ॥ २९ ॥

मुदितेति । नायकलाभसम्भावनाविमत्तया ऽऽनन्दयतीत्यर्थः ।

गोष्ठेषु तिष्ठति पतिर्बधिरा ननान्दा
नेत्रद्वयस्य च न पाटवमस्ति यातुः ।
इत्थं निशम्य तरुणी कुचकुम्भसीम्नि
रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥ ३० ॥

मुदितामुदाहरति गोष्ठेष्विति । का चित्सखी स्वनायिकासन्निधमेव पथिकं वक्ति हे पान्थ अस्याः पतिः । पातीति पतिर्भर्त्ता । पतिपदमप्रियत्वं ध्वनयति । गोष्ठेषु गावस्तिष्ठन्त्यत्रेति गोष्ठानि गोष्ठं गोस्थानकं समे इत्यमरः । बहुवचनेन चिरकालमत्याद्वृत्तिकत्वं ध्वन्यते । तिष्ठत्यहर्निशमिति भावः । किं च ननान्दा न नन्दति भ्रातृजायामिति ननान्दा । भर्तृभगिनी । ननान्दापदं नियतद्वेषविशेषवत्त्वं व्यनक्ति । बधिरा श्रवणाऽभाववती । बधिरस्य प्रायेण मूकत्वात् दृष्टमप्यनया

का चित्सखी नायिकासविधे पान्थं वक्ति गोष्ठेष्विति । बहुवचनेन चिरकालमप्रत्यावृत्तिः तस्य वृषतुल्यता चाऽत्रावेद्यते । तिष्ठति सर्वदेति शेषः । तेनाऽतिपीडितायामस्यामनुग्रहौचित्यम् । बधिरेति । बधिरस्य प्रायो मूकत्वात् दृष्टमप्यनया वक्तुं न शक्यमिति भाव. । नेत्रद्वयस्याऽपाटवात् श्रवणस्य च । इत्थं तरुणी श्रुत्वा । अत्र तरुणीत्यनेन सङ्केतितनायकस्याऽतिस्पृहणीयत्वं सादरश्रवणार्थेन निशम्येत्यनेन सङ्केतस्याऽतिप्रियत्वम् । कुचौ कुम्भाविव करिगण्डाविवेत्यनेनाऽतिकठिनत्वम् । तयोः सीम्नि परिसरे रोमाञ्चाः कञ्चुकमिव कवचमिवोदञ्चितं निबिडं रमणीयं वा विस्तृतं जातम् । कञ्चुकपदेन नैबिड्यं तेन हर्षातिशयः । अत्र कठिनयोरपि कुचयोः कञ्चुककरणेन विचित्रोद्भूतसुरतप्रियत्वमपि व्यज्यते ॥३०॥

वक्तुमशक्यमिति भावः। तथा पातुः देवरपत्न्याः नेत्रद्वयस्य नेत्रयुगलस्य च चकाराच्छ्रोत्रयुगलस्य चेत्यर्थः। पाटवं सामर्थ्यं नास्तीत्यर्थः। इत्थं पतिरनागन्ता तद्भगिनीदेवरपत्न्योश्चाऽङ्गविकलत्वं तरुणी चेयं मत्सखी तस्मात्त्वया ऽत्र स्थातव्यमिति सङ्केतद्योतकं सखीवाक्यं निशम्य सादरं श्रुत्वा। एवं च सङ्केतस्याऽतिप्रियत्वं ध्वन्यते। तरुणी नायिका। तरुणीपदं सङ्केतितनायकस्पृहणीयत्वं व्यञ्जयति। तच्चाऽवश्यम्भावि सुरतम्। कुचकुम्भसीम्नि कुचौ कुम्भाविव करिगण्डाविव तयोः सीम्नि परिसरे। कुम्भपदं काठिनत्वं व्यञ्जयति। उदञ्चितमुत्कृष्टं रमणीयं वा रोमाञ्चकञ्चुकम् रोमाञ्चः कञ्चुकमिव लोहजाऽङ्गत्राणमित्यर्थः। कञ्चुको वारबाणोऽस्त्रीत्यमरः। कञ्चुकपदं नैविड्यं ध्वनयति तच्च हर्षाऽतिशयम्। आनतान विस्तारयति स्म। आनन्दादिति भावः। एवं च स्वतः कठिनतरयोरपि कुचयोः सुरतसङ्गरे भङ्गो मा भवत्विति धिया कञ्चुककरणेन सुरतप्रियत्वमभिव्यज्यते। एवं च ननान्दाया बाधिर्येऽपि नेत्रसत्त्वाद्देवरपत्न्याश्च नेत्राऽभावेऽपि श्रोत्रसत्त्वात् सुरतप्रतिबन्धकप्रदर्शनेन कथं सङ्केतकरणमिति दूषणमलग्नकं वेदितव्यम्। ऋजवस्तु नात्र सुरतप्रतिबन्धकसामान्याभावविवक्षेत्याहुः। अत्रैतादृशोक्तिवस्तुना पान्थस्य सङ्केतदानप्रतीतिरूपं वस्तु ध्वन्यते। तेन चाऽयमुपभोग्य इति नायिकाहर्षप्राप्तिरूप वस्तु व्यज्यते। वसन्ततिलकावृत्तम् ॥ ३० ॥

कन्यका यथा ।

किञ्चित्कुञ्चितहारयष्टि सरलभ्रूवल्लि साचिस्मितम्
प्रान्तभ्रान्तविलोचनद्युति भुजापर्यस्तकर्णोत्पलम् ।

सपरिकरां परोढामभिधाय कन्यकां लक्षयति किं चिदिति । काचित्कां चित्प्रत्याह किं चित कुञ्चितहारयष्टि । किञ्चित मनाक् कुञ्चिता वलयिता तिर्यग्वलनादिति भावः । हारयष्टिर्हारलता यत्र क्रियायाम् । तथा किंचित्पदं बहुतरतिर्यग्वलने सविधजनस्याऽऽकूतज्ञानं भविष्यतीति सङ्केतदानगोपनं व्यञ्जयति । हारपदं चित्तापकर्षकत्वं स्वच्छान्तःकरणत्वं च ध्वनयति । । यष्टिपदं कठिनतामावेदयति । सा च कामुकदर्शनसमयसञ्जातविरहकातरताम् । स्त्रीलिङ्गनिर्देशश्च स्वनिष्ठलज्जायास्त्वौचितीं द्योतयति । सा च तव तु तथा न तद्वत्त्वमुचितमिति निःशङ्कत्वौचित्यम् । समस्तं च सङ्केतागमनावसरे

किं चिदिति । तिर्यग्वलनादिति । किञ्चित्पदं च सविधजनस्य साकूतज्ञानं मा भूदिति । हारत्वेन चित्ताकर्षकत्वम । सरलेत्यकुटिलेत्यर्थ । कन्यकात्वादेव तेन सस्पृहाऽनवलोकनीयत्वम । अन्यापदेशेन तिर्यक् स्मितं यत्र तथा कान्तस्य दृङ्मार्गाऽपसरणे प्रान्तयोर्भ्रान्ता विलोचनद्युतिर्यत्र वक्रग्रीवाकरणादेव भुजायां पर्यस्तं सम्बद्धं नेत्रोत्पलं यत्र । अत्र स्मितगोपनेन ज्योत्स्नायां नागन्तव्यमिति प्रान्तभ्रान्तेत्यनेनाऽन्यानवलोकिनमागच्छेरिति भुजापर्यस्तेत्यनेन कदा भुजायां त्वत्करकमलसंयोगो भविष्यतीत्यालिङ्ग-

अङ्गुल्या स्फुरदङ्गुलीयकरुचा गण्डस्य कण्डूयनं
कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते॥ ३१॥

तिर्यग्विलोकनेन जनगोपनकर्त्तव्यतां व्यनक्ति। किं च सरलभ्रूवल्लि सरले अकुटिले भ्रूवल्ली भ्रूलते यत्र। सरलपदेन सस्पृहाऽवलोकनीयत्वं व्यज्यते। वल्लिपदेन सरसत्वं ध्वन्यते। स्त्रीलिङ्गनिर्देशेन स्त्रीयस्वाभाविककौटिल्यस्यापि त्यागेन कामुकविषयकप्रेमातिशयो द्योत्यते। समस्तेन च स्त्रीयदूरदर्शित्वम्। साचि तिर्यग्घसितं स्मितं यत्र। अन्यापदेशेन भावः। एवं च हास्यगोपनेन ज्योत्स्नायां नाऽऽगन्तव्यमिति व्यज्यते। किं च प्रान्तभ्रान्तविलोचनद्युति प्रान्तयोरपाङ्गयोर्भ्रान्ता व्याकुला विलोचनयोर्नेत्रयोर्द्युतिः कान्तिर्यत्र। भ्रान्तपदं कामुको दृङ्मार्गान्मा ऽपसरत्विति विरहभीरुतां गमयति। समस्तं च सङ्केतमगनकाले परितो विलोकनेनाऽन्याऽनवलोकनीयतया आगमनगोपनं व्यञ्जयति। किं च भुजापर्य्यस्तकर्णोत्पलम् भुजायां बाहौ 'भुजा च गुर्वी'मिति माघीयप्रयोगदर्शनात् भुजाशब्दः स्त्रीलिङ्गोप्यस्ति। पर्यस्तं पतित कर्णोत्पलम् अवतंसीकृतमिति भावः। एवं च मद्भुजायां कदा त्वत्करकमलसङ्गो भविष्यतीत्यालिङ्गनौत्क-

नौत्कण्ठ्यम् करणस्य कण्डूयनमित्यनेन बद्धमौनेनाऽगन्तव्यमिति त्वद्वचनामृतपात्रता ऽस्य भवत्विति गण्डस्येति पाठे मत्कपोलयोश्च स्वकरेण पत्रावली रचनीयेति व्यङ्ग्यम्। नृपकन्यकेति दुष्प्रापत्वम्। यमालोकते स सुकृतीति भावः। अत्र नायकस्य मदनुरक्तेति प्रतीतिर्ध्वनिः॥ ३१॥

वित्तमात्रोपाधिकसकलपुरुषाऽनुरागा सामान्यवनिता ।

ण्ठ्यं ध्वन्यते । तथा स्फुरदङ्गुलीयकरुचा स्फुरन्ती दीप्यमाना अङ्गुलीयकस्योर्मिकायाः । अङ्गुलीयकमूर्मिकेत्यमरः । रुक् कान्तिर्यस्याः तया । एवं च भूषणस्याऽतिशोभाजनकतया ऽङ्गुल्याः शोभाऽतिशयो ध्वन्यते । अङ्गुल्या गण्डस्य कपोलस्य कण्डूयनं कुर्वाणा विदधती । एव च मत्कपोले त्वया स्वकरेण पत्रवल्ली विरचनीयेति व्यञ्जयति । कर्णस्येति पाठे त्वद्वचनामृतपात्रता झटित्यस्य कर्णस्य भवत्विति ध्वनयति । नृपकन्यका राजकन्यका । नृपपदं दुष्प्रापत्वं व्यनक्ति । यद्वा इतरनरसंरक्षकस्य स्वीयकन्यकारक्षणे किं काठिन्यमिति तथाविधरक्षणादिपरिहारपुरःसराऽवलोकनेनाऽतिवश्यत्वम् । सुकृतिनं सुकृतपरिपाकवन्तं युवानम् । यस्त्वक्ष्यते समय इतिवद् यमालोकयते स सुकृतीति वचनव्यक्तिः । सव्याजं तादृशाचेष्टाभिः स्वाकूतं ख्यापयन्ती किमपि व्याजीकृत्य धाष्ट्र्याऽभावाद् सखीसान्निध्यादिति वा आलोकते विलोकयति । मदनपरवशतयेति भावः । तादृशचेष्टाचरणेन वस्तुना नायकस्य मय्यनुरक्तेयमिति प्रतीतिरूपवस्तुध्वनिः । शार्दूलविक्रीडितं वृत्तम् ॥ ३१ ॥

लब्धाऽवसरत्वात् सामान्यवनितां लक्षयति वित्तमात्रेति । वित्तेतराऽनुपाधिकत्वे सति वित्तोपाधिकसकलपुरुषविषयकाऽनुरागवत्त्वमित्यर्थः । परकीयाया अपि कदा चिद्वित्तो-

वित्तमात्रेति । वित्तेतराऽनुपाधिकत्वे सति तदुपाधिकानुरागवतीत्यर्थः । परकीयाया अपि कदा चिद्वित्तोपाधिकाऽनुरागस-

न चाऽग्निमित्रे क्षितिपतावनुरक्तायामैरावत्यामव्याप्तिः । तत्र वित्तमात्रोपाधेरभावादिति चेन्नैवम् । सापि काश्मीरहीरादिदातरि महाराजे ऽनुरक्ता न तु महर्षौ, तेनाऽवगम्यते तत्रापि वित्तमात्रमेवोपाधिरिति । महर्षौ सौन्दर्य्योपाध्यनुरागस्य कालिकाव्याप्यवृत्तित्वेन सार्वत्रिके वित्तमेवोपाधिरिति प्रतिभाति ।

पाधिकाऽनुरागवत्त्वात् तत्राऽतिव्याप्तिरतः सत्यन्तम् । ननु तर्ह्यग्निमित्रादिनृपतिसौन्दर्यगुणोपाधिकाऽनुरागभागैरावत्यादावव्याप्तिरित्याह न चेति । अग्निमित्रैरावतीपदे चारुदत्तवसन्तसेनोपलक्षके । अव्याप्तिमेव विवृणोति तत्रेति । वित्तमात्रोपाधेरभावात् सौन्दर्यादिगुणोपाधिमत्त्वात् इति भावः । उत्तरयति नैवमित्यादि । सापि ऐरावत्यपि । अपिना चारुदत्तगुणलुब्धाया वसन्तसेनायाः संग्रहः । महाराजे ऽग्निमित्रे चारुदत्ते च । महर्षौ अदातरीत्यर्थः । फलितमाह तेनेत्यादि । तेन अदात्रनुरागाऽभावविशिष्टमहाराजाऽग्निमित्राद्यनुरागेण हेतुनेत्यर्थः । अवगम्यते अनुमीयते । तत्रापीति । वित्तमात्रमेव न सौन्दर्यादीत्यर्थः । अयं भावः । ऐरावतीव-

त्सत्यन्तम । अनुरक्तायामिति । सौन्दर्यादिगुणोपाधिनेति शेषः । महर्षाविति । अदातरीत्यर्थः । वित्तमात्रमेवेति । न सौन्दर्यादीत्य- । वस्तुतः सामान्यवनितात्वं कालिकाव्याप्यवृत्तित्वम । यावित्तोपाधिकाऽनुरागस्तावत्तत्त्वम । चिरपरिचयोत्तरं सौन्दर्यादिनानुरागे तु नास्त्येव तत्त्वम । किं तु परकीयात्वमेव । तदीयाऽनुरागस्य सूक्ष्ममात्रवेद्यतया परकीयालक्षणाऽव्याप्तिः ।

सामान्यवनिता यथा ।

दृष्ट्वा प्राङ्गणसन्निधौ बहुधनं दातारमभ्यागतं
वक्षोजौ तनुतः परस्परमिवाऽऽश्लेषं कुरङ्गीदृशः ।

सन्तमेने वित्तेतराऽनुपाधिकत्वे सति वित्तोपाधिकाऽग्निमित्रचारुदत्तमहाराजाऽनुरागवत्सौ अदात्रनुरागाऽभावविशिष्टत्वादिदानशीलाऽग्निमित्रचारुदत्ताऽनुरागवत्त्वात् यत्रैवं तत्रैवमित्यनुमानात् तत्रापि वित्तोपाधिक एवाऽनुरागः । अत एव दशरूपके ऽप्युक्तम् ।

छन्नकामसुखार्थज्ञस्वतन्त्राऽहंयुपण्डकान् ।
रक्तेव रञ्जयेत्सार्थान् निःस्वान्मात्रा विवासयेत् ॥ इति ।

यदीदानीन्तना अपि काश्चित्सामान्यवनिताः केषांचित्सौन्दर्यादिगुणलोभात् स्वीयधनैरेवोपकुर्वन्तीति प्रत्यक्षविरुद्धेयं कल्पनेति विभाव्यते तदोक्तरीत्या सामान्यवनितात्वस्योपाधेः कालिकाव्याप्यवृत्तित्वमेव । प्रथमतः सामान्यवनितायां विना धनेनाऽनुरागश्चिरपरिचयोत्तरं तु सौन्दर्यादिना ऽनुराग इति तदवस्थायां नास्त्येव सामान्यवनितात्वम् । ननु तदा तासां काऽन्तर्भाव इति चेत् परकीयायामिति गृहाण । न चाऽप्रकटपरपुरुषाऽभिलाषेति लक्षणाव्याप्त्यापत्तिः । परकीयाया अपि न सर्वान् प्रत्यप्रकटपरपुरु-

दृष्ट्वेति । अभ्यागतं न त्वाकारितम् । तेन स्वतःप्रवृत्ततया बहुधनदातृत्वं तेन हर्षाऽतिशयः । दृष्ट्वेति । न तु स्पृष्ट्वेति । तेन दर्शनमात्रेण तादृशावस्थेति धनलुब्धत्वम् । वक्षोजत्वेनात्मरञ्जना तेन स्वनायिकासुखसाधनममयमेव हर्षयोग्यता । अन्योन्यमिति समानहर्षता । आश्लेषमालिङ्गनम् । हारादिप्राप्तिसम्भावनयेति । तनुत इत्य-

आनन्दाऽश्रुपयांसि मुञ्चति मुहुर्मालामिषात्कुन्तलो
दृष्टिः किं च धनागमं कथयितुं कर्णान्तिकं गच्छति॥ ३२॥

याभिलापो यथा तथाऽत्रापीति दिक् । केचित्तु सकलपदं बाहुल्याऽभिप्रायं बाहुल्येन वित्तमात्रोपाधिकाऽनुरागवत्त्वमिति लक्षणमाहुस्तत्र । अननुगमाद् ।

सामान्यवनितामुदाहरति दृष्ट्वेति । का चित्कां चित्प- साह प्राङ्गणसंनिधौ प्रकृष्टमङ्गणं प्राङ्गणम् । प्रकर्षश्च सुभग-जनसंगमसंनिहितत्वं दूरतोपि दृश्यकामुकत्वं वा । तत्संनिधौ चत्वरनिकटे । अङ्गणं चत्वराऽजिरे इत्यमरः । संनिधिपदं दूरत एव दर्शनेनैतादृशाऽत्रस्थोत्पश्या धनलुब्धत्वमावेदयति । बहुधनं बहुद्रव्यवन्तं दातृत्वाऽभावे बहुधनवत्त्वमप्रयोजकमित्यत आह दातारं दानशीलमित्यर्थः । अभ्यागतमनाकारितमिति भावः । स्वतःप्रवृत्तत्वेनाऽधिकधनदातृत्वं द्योत्यते । तेन च हर्षाऽतिशयः । दृष्ट्वा विलोक्य न तु स्पृष्ट्वा । एवमपि दर्शनमात्रादेव एतादृशयत्नस्येति धनलुब्धत्वं द्योत्यते । कुरङ्गीदृशः मृगनेत्रायाः । मृगे कुरङ्गवातायु इत्यमरः । कुरङ्गपदं विशालत्वचपलत्वे द्योतयति । वक्षोजौ कुचौ । वक्षोजपदमन्तरङ्गतां गमयति । सा च स्वनायिकासुखसाधनसमयहर्षयोग्यताम् । पर-

नेन चिरकालस्थायित्वं तेन हर्षातिशयः । कुन्तलपदेन कामिमनोजेतृत्वं मालेत्यनेन कामिकत्वं पयांसीत्यनेन कामिहृदयमदनानलोपशमशीलता चिरकालेन ममापि भूषणलाभो भविष्यतीति आनन्दाश्रु नायिकागतश्च हर्षजन्यातिशयसंभ्रमो व्यज्यते । अत्र दर्शनानन्देन गात्रस्फुरणे सहसैव स्तनसंपर्के आश्लेषोत्प्रेक्षा स्वाऽभिलापप्रकटनाय शिरसि चेलाञ्चलदानेन करादिसंपर्केणाऽङ्गयष्टिकम्पेन बाष्पच्युतिः । कर्णविश्रान्तनेत्रकटाक्षविलोकनेन गमनोत्प्रेक्षेत्याद्यु.॥३२॥

स्परमन्योन्यम् । परस्परपदं समानहर्षतामावेदयति । आश्लेषमालिङ्गनमिव । हारादिप्राप्तिसम्भावनयेति भावः । आश्लेषपदं हर्षविशेषं व्यञ्जयति । तनुत इव विस्तारयत इव । तनुत इत्यनेनाऽऽश्लेषे चिरकालाऽवस्थायित्वं ध्वन्यते । तेन च हर्षाऽतिशयः । कुन्तलाः कचाः सन्त्यस्मिन् संयतत्वेन स कुन्तल इति अर्शआदिभ्यो ऽच् । चिकुरः कुन्तलो वाल इत्यमरः । धम्मिल्लोपि । कुन्तलपदं कामिमनोजयकारणत्वं व्यनक्ति । मालामिषात् पुष्पस्रग्व्याजात् । मालापदं कामितां द्योतयति । आनन्दाश्रुपयांसि आनन्दो हर्षः शिरोभूषालिप्सयेति भावः । तेनाऽश्रुपयांसि अश्रुबिन्दूनि च । पयःपदं कामिहृदयमदनाऽनलोपशमनशीलतामावेदयति । मुञ्चति विसृजति । किं च अन्यच्च । दृष्टिः दृष्टिपदं धनदातृत्वाऽदातृत्वविवेकित्वं ध्वनयति । एकवचनं चैकरूपतया सत्यकथकत्वम् । धनागमं धनप्राप्तिम् । धनपदेन नानाविधत्वं ध्वन्यते । कथयितुं ख्यापयितुम् । तुमुना स्वतःप्रवृत्तत्वं व्यज्यते । तेन चाऽन्तरङ्गत्वं समीचीनत्वं च । कर्णान्तिकमिति पाठेपि तदेव व्यङ्ग्यम् । गच्छतीव । अत्र तद्दर्शनाऽऽनन्देन गात्रस्फुरणे सहसैव स्तनसंपर्के आश्लेषोत्प्रेक्षा । स्वाऽभिलाषप्रकटनाय शिरसि चैलाऽञ्चलदाने करादिसम्पर्केणाङ्गयष्टिकम्पः । श्रोत्राऽन्तिकं श्रोत्रनिकटम् । श्रोत्रपदेन रहस्यकथनयोग्यता ध्वन्यते । कम्पेन वाष्पच्युतौ आनन्दाऽश्रुत्यागोत्प्रेक्षा कर्णविश्रान्तनेत्रकटाक्षविलोकने गमनोत्प्रेक्षा । एवं लुप्ताऽलुप्तयोरुत्प्रेक्षयोः संसृष्टिः । उक्तं च । 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति । सा च बहुधनदातृत्वस्येतरार्थं प्रति हेतुत्वाद्वाक्यार्थहेतुकाव्यलिङ्गाऽनुसंहिता । शार्दूलविक्रीडितं वृत्तम् ॥३२॥

इति श्रीव्यङ्ग्यार्थकौमुद्यां स्वीयापरकीयासामान्यानिरूपणम् ॥

एता अन्यसम्भोगदुःखिता वक्रोक्तिगर्विता मानवत्यश्चेति तिस्रो भवन्ति ।

तत्राऽन्यसम्भोगदुःखिता यथा ।

त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम् ।
किंशुकाऽऽभरणं देहे दृश्यते कथमन्यथा ॥ ३३ ॥

एवं तिस्रो नायिका निरूप्य तासामेव भेदान्तरमाह । एता इत्यादि। मुग्धादिभेदहीनस्वीयापरकीयासामान्या इत्यर्थः। अन्यसम्भोगदुःखिता । अन्यस्याः परस्याः सम्भोगः स्वनायकेन सह रतिप्रसङ्गस्तेन दुःखिता इत्यर्थः । स्वनायकीयनायिकान्तरसम्भोगज्ञानजन्यदुःखवत्त्वमिति तल्लक्षणं फलितम् । वक्रोक्तिगर्विता इति । वक्रोक्त्या उक्तिविशेषेण गर्विता स्वगर्वप्रदर्शनकारिणी । उक्तिविशेषप्रकटितस्वगर्वत्वमिति फलितम् । मानलक्षणमग्रे वक्ष्यते ।

एता इति । स्वीयापरकीयासामान्या इत्यर्थः । अन्यस्याः सम्भोगे स्वनायकेन दुःखिता इत्यर्थः । तेन स्वनायकीयनायिकान्तरसम्भोगज्ञानजन्यदुःखवत्त्वं तल्लक्षणम् । वक्रोक्तिगर्विता । वक्रोक्तिव्यङ्ग्यगर्ववतीत्यर्थः । गर्वश्च प्रेमविषयकः सौन्दर्यविषयो वा । उक्तिविशेषप्रकटितस्वगर्वत्वं लक्षणम् ।

नायकानयनाय प्रेषितां तेनोपभुक्तां दूतीमाह दूतीति । अनेनाऽसत्यभाषणयोग्यत्वं स्ववेदनाऽनभिज्ञत्वं स्वकार्यैकरणप्रवणत्वं व्यनक्ति । कुञ्जमित्यनेन विविधमदनोद्दीपनशीलत्वम् । पापीयसो निर्दयस्याऽधमदूतीसम्भोगकर्तुश्च । किंशुकः पलाशकुसुमं तदाकार नखक्षतञ्च ।

स्परमन्योन्यम् । परस्परपदं समानहर्षतामावेदयति । आश्ले-
षमालिङ्गनमिव । हारादिमाप्तिसम्भावनयेति भावः । आश्ले-
षपदं हर्षविशेष व्यञ्जयति । तनुत इव विस्तारयत इव । तनु-
त इत्यनेनाऽऽश्लेषे चिरकालाऽवस्थायित्वं ध्वन्यते । तेन च
हर्षाऽतिशयः । कुन्तलाः कचाः सन्त्यस्मिन् संयतत्वेन स
कुन्तल इति अर्शआदिभ्यो ऽच् । चिकुरः कुन्तलो वाल इ-
त्यमरः । धम्मिल्लोपि । कुन्तलपदं कामिमनोजयकारणत्वं व्य-
नक्ति । मालामिषात् पुष्पस्रग्व्याजात् । मालापदं कामितां
द्योतयति । आनन्दाश्रुपयांसि आनन्दो हर्षः शिरोभूषालि-
प्सयेति भावः । तेनाऽश्रुपयांसि अश्रुबिन्दूनि च । पयःपदं
कामिहृदयमदनाऽनलोपशमनशीलतामावेदयति । मुञ्चति वि-
सृजति । किं च अन्यच्च । दृष्टिः दृष्टिपदं धनदातृत्वाऽदातृ-
त्वविवेकित्वं ध्वनयति । एकवचनं चैकरूपतया सत्यकथकत्व-
म् । धनागमं धनप्राप्तिम् । धनपदेन नानाविधत्वं ध्वन्यते ।
कथयितुं ख्यापयितुम् । तुमुना स्वतःप्रवृत्तत्वं व्यज्यते । तेन
चाऽन्तरङ्गत्वं समीचीनत्वं च । कर्णान्तिकमिति पाठेपि तदेव
व्यङ्ग्यम् । गच्छतीव । अत्र तद्दर्शनाऽऽनन्देन गात्रस्फुरणे
सहसैव स्तनसंपर्के आश्लेषोत्प्रेक्षा । स्वाऽभिलाषप्रकटनाय शि-
रसि चैलाऽञ्चलदाने करादिसम्पर्केणाङ्गयष्टिकम्पः । श्रोत्राऽन्ति-
कं श्रोत्रनिकटम् । श्रोत्रपदेन रहस्यकथनयोग्यता ध्वन्यते ।
कम्पेन वाष्पच्युतौ आनन्दाऽश्रुत्यागोत्प्रेक्षा कर्णविश्रान्तनेत्र-
कटाक्षविलोकने गमनोत्प्रेक्षा । एवं लुप्ताऽलुप्तयोरुत्प्रेक्षयोः सं-
सृष्टिः । उक्तं च । 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्'
इति । सा च बहुधनदातृत्वस्येतरार्थं प्रति हेतुत्वाद्वाक्यार्थ-
हेतुककाव्यलिङ्गाऽनुसंहिता । शार्दूलविक्रीडितं वृत्तम् ॥३२॥

इति श्रीव्यङ्ग्यार्थकौमुद्यां स्वीयापरकीयासामान्यानिरूपणम् ॥

एता अन्यसम्भोगदुःखिता वक्रोक्तिगर्विता मानवत्यश्चेति तिस्रो भवन्ति।

तत्राऽन्यसम्भोगदुःखिता यथा।

त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम्।
किंशुकाऽऽभरणं देहे दृश्यते कथमन्यथा॥ ३३॥

एवं तिस्रो नायिका निरूप्य तासामेव भेदान्तरमाह। एता इत्यादि। मुग्धादिभेदहीनस्वीयापरकीयासामान्या इत्यर्थः। अन्यसम्भोगदुःखिता। अन्यस्याः परस्याः सम्भोगः स्वनायकेन सह रतिप्रसङ्गस्तेन दुःखिता इत्यर्थः। स्वनायकीयनायिकान्तरसम्भोगज्ञानजन्यदुःखवत्त्वमिति तल्लक्षणं फलितम्। वक्रोक्तिगर्विता इति। वक्रोक्त्या उक्तिविशेषेण गर्विता स्वगर्वप्रदर्शनकारिणी। उक्तिविशेषप्रकटितस्वगर्ववत्त्वमिति फलितम्। मानलक्षणमग्रे वक्ष्यते।

एता इति। स्वीयापरकीयासामान्या इत्यर्थः। अन्यस्याः सम्भोगे स्वनायकेन दुःखिता इत्यर्थः। तेन स्वनायकीयनायिकान्तरसम्भोगज्ञानजन्यदुःखवत्त्वं तल्लक्षणम्। वक्रोक्तिगर्विता। वक्रोक्तिव्यङ्ग्यगर्ववतीत्यर्थः। गर्वश्च प्रेमविषयकः सौन्दर्यविषयो वा। उक्तिविशेषप्रकटितस्वगर्ववत्त्वं लक्षणम्।

नायकानयनाय प्रेषितां तेनोपभुक्तां दूतीमाह दूतीति। अनेनाऽसत्यभाषणयोग्यत्वं स्वभेदनाऽनभिज्ञत्वं स्वकार्यैकरणप्रवणत्वं व्यनक्ति। कुञ्जमित्यनेन विविधमदनोद्दीपनशीलत्वम्। पापीयसो निर्दयस्याऽधमदूतीसम्भोगकर्तुश्च। किंशुकः पलाशकुसुमं तदाकारं नखक्षतञ्च।

प्रथमोद्दिष्टत्वादन्यसम्भोगदुःखितामुदाहरति त्वं दूतीति । का चिन्नायिका स्वयमेव नायकाऽऽकारणाय प्रेषितां तेनोपभुक्तां दूतीं प्रति वदति । हे दूति दूतीपदमसत्यभाषित्वमावेदयति । अन्यदीयवेदनाऽनभिज्ञत्वं स्वकार्यकरणप्रवणत्वं वा । त्वं कुञ्जं लतापिहितप्रदेशम् । अनादिष्टमिति भावः । कुञ्जपदं विविधोद्दीपनविभाववत्तया मदनबाधाजनकतां व्यञ्जयति । निरगाः गतवती । निरगा इत्यनेन गमने बुद्धिपूर्वकता व्यज्यते । गातिस्थेति सिचो लुक् । परं पापीयसो निर्दयस्य पापीयःपदं दूतीसङ्गतियोग्यतामावेदयति । एकवचनमनादरं व्यञ्जयति । गृहं सदनम् । आदिष्टमिति भावः । गृहपदं गमनयोग्यतां ध्वनयति । द्वितीया स्पृहणीयतां व्यनक्ति । न निरगाः । प्रमाणसिद्धार्थप्रतिपादकं मद्वाक्य नाऽलीकमित्याह अन्यथेति । उक्तवैपरीत्ये तवेति शेषः । तवेति पदाऽनुपादानेन स्वतन्त्रता ध्वन्यते । तथा च स्वतन्त्रस्य किमकार्यमिति द्योत्यते । तेन च स्वनायकसङ्गमशालित्वम् । देहे अङ्गे । देहपदं सन्तोषपात्रतां व्यञ्जयति । किंशुकाभरणं किंशुकानां पलाशपुष्पाणामाभरणं मालेति यावत् । यद्वा तान्येवाऽऽभरणमलङ्कारः इतराऽलङ्करणसत्त्वे तत्त्वतो न वेद्मि कारणम् । किंशुकाभरणं तु स्फुटं प्रत्येमीत्यर्थः । एवं च स्फुटपरिदृश्यमानकिंशुकाभरणवत्त्वया कुञ्जगमनाऽनुमानात् मया त्वदीयकुञ्जगमनं तत्त्वतोऽवमितमतो नाऽहमनारणीयेति भावः किंशुकपदेनाऽऽरक्तत्वं कुटिलत्वं च व्यज्यते । आभरणपदं सुखजनकतां व्यनक्ति । एकवचनं

न चेयं खण्डितैवेति वाच्यम् । प्रियाऽङ्गसङ्गिकामिन्यन्तरलक्ष्मदर्शनसञ्जातखेदा खण्डिता स्वप्रियसम्भोगलक्ष्मवत्कामिनीदर्शनसञ्जातखेदेयमिति भेदात् ॥ ३३ ॥

दुर्लभता ध्वनयति। कथं दृश्यते। यद्वा दूति दूयते परित-प्यते सा दूती तदामन्त्रणे हे दूति मत्खेदखिन्ना त्वं तापोप-शामकं कुञ्जं गतवती मत्प्रियतमविरहदुःखेन दुःखितमात्मानं तद्गुणनायकवस्तुलाभेन सुखयन्ती मामपि तथाविधां स्वाऽभिन्न-ताऽभिमानेन सम्भावयन्ती कुञ्जं जनसंवासरहितप्रदेशविशेषं गतवती। परं तु पापीयसो मद्दुःखदस्य मदर्थमनेकचाटुवचन-रचनाकारिणः तत्स्वामिकत्वात्तथाविध तद्गृहं अहङ्कारेणैव न गतवती। तथा च साधु इद चेष्टितं कृतम्। एतेनाऽहम-तीव सुखिता ऽस्मीत्याकूतविशेषो व्यज्यते। प्रबलतरयत्नेन कुसुमशरस्य अरुन्तुदा अतितप्ता इव रक्ता इमे शराः अप-हृत्य समानीता अतो न ते कापि कुसुमसायकवेदना भवि-ष्यतीति मत्समाधानविधानायैव स्फुटं ध्रियमाणान्याभरण-रूपाणि किंशुकानि दृश्यन्तइत्यर्थः। तथा च सर्वं मत्प्रिय त्व-या सम्पादितमतस्त्वत्समानामन्यां सहचरीं न पश्यामीत्युप-हासो व्यज्यते। अत्र "व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिर-न्यथे"ति लक्षणलक्षितव्याजस्तुतिः वक्रोक्त्यपह्नुतिसंसृष्टा। अनुमान तु तत्कार्यकारणाद्यवधारणमिति लक्षणलक्षितकिं-शुकलिङ्गककुञ्जगमनाऽनुमानरूपालङ्कारेण प्रियमुक्तदूतीन-खक्षताविसम्भोगलक्ष्मदर्शनेन नायिकाया दुःखागमप्रतीति-रूपं वस्तु ध्वन्यते। तेन च प्रियदूत्योरपराधप्रकाशनरूपं वस्तु व्यज्यते। ननु खण्डितेवेयमिति ततो ऽन्यसम्भोगदुःखिता ऽन्येति चेत्सत्यम्। प्रियाऽङ्गसङ्गिकामिन्यन्तरलक्ष्मदर्शनस-ञ्जातखेदवती खण्डिता, स्वप्रियसम्भोगलक्ष्मवत्कामिनीद-र्शनसञ्जातदुःखवती अन्यसम्भोगदुःखितेति तदियमेवाऽव-स्थाभेदाद्भिन्ना। अत एव अन्योपभोगचिन्हितपतिदर्शनस-

वक्रोक्तिगर्विता द्विविधा, प्रेमगर्विता सौन्दर्यगर्विता च।

तत्र प्रेमगर्विता यथा।

वपुषि तव तनोति रत्नभूषां
प्रभुरिति धन्यतमाऽसि किं ब्रवीमि।

ज्ञातदुःखात्त्वमेव खण्डितालक्षणं वक्ष्यति ग्रन्थकृत्। इदं च स्वीयादित्रितयसाधारणमुदाहरणम्। एवमग्रेऽपि बोध्यम्। पथ्यावक्त्रं वृत्तम्॥ ३३॥

उद्दिष्टक्रमाद्वक्रोक्तिगर्विताविभागमाह प्रेमेत्यादि। प्रियतमनिरूपितस्वगतप्रीत्यतिशयगर्वव्यञ्जकवक्रोक्तिरचनानिपुणत्वं प्रेमगर्वितात्वम्। तथा स्वगतसौन्दर्योत्कर्षगर्वप्रयुक्तवक्रोक्तिरचनानिपुणत्वं सौदर्यगर्वितात्वम्।

तत्र प्रथमोद्दिष्टत्वात् प्रथमामुदाहरति वपुषीति। काचित् भङ्ग्यन्तरेण स्वगतप्रियतमप्रीत्यतिशयमाविष्कर्तुं सखीं प्रत्याह हे सखि प्रभुर्भर्ता। प्रभुपदं समर्थतां व्यञ्जयति। सा च यथा बहुलतयाऽलङ्करणादिकं गेहे स्थापनीयं तथा तव देहे स्थापितमतो न तोषातिशय इति प्रियतमाऽनादरं ध्वनयति। यद्वा प्रभुपदं स्वतन्त्रत्वं व्यनक्ति तदपि दुराराध्यत्वं कार्यकालीनप्रेमकारित्वं वा। तत्र वपुषि अङ्गे रत्नभूषां रत्न-

वपुषीति। तनुः शरीरम्। नयने च तयोरन्तराले व्यवधानम् तेन भीरु। तव प्रभुर्न प्रिय। तव वपुषि रत्नभूषां तनोति यद्धि स्वतो न शोभते तस्यैव भूषा युक्ता न त्वन्यस्येति भावः। अत एव वपुषीत्युक्तम्। त्वं धन्यतमासि आपाततो ऽहमधन्येति वक्रोक्त्या ऽहमेव धन्या त्वमधन्यैवेति व्यतिरेको व्यज्यते॥ ३४॥

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ५ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| [illegible] | ० | १ | ० |

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS:

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No 84.*

# रसमञ्जरी ।

श्रीभानुभट्टप्रणीता

अनन्तपण्डितकृतव्यङ्ग्यार्थकौमुद्या

नागेशभट्टकृतप्रकाशेन च सहिता ।

# RASAMANJARI

BY

BHÂNU BHATTA,

*With the Commentaries*

VYANGYÂRTHAKOUMUDÎ OF ANANTA PANDIT

AND PRAKÂSA OF NÂGESA BHATTA.

EDITED BY

Râma Sâstri Tailanga,

PROFESSOR, GOVT. SANSKRIT COLLEGE, BENARES

*Fasciculus II*

BENARES.

*Published by the Proprietors Messrs Braj B Das & Co*

AND SOLD BY H D GUPTA,

*Secretary, Chowkhamba Sanskrit Book D—*

Printed at the Vidyâ vilas Press

BENARES

1904.

सखि तनुनयनान्तरालभीरुः
कलयति मे न विभूषणानि कान्तः ॥ ३४ ॥

सौन्दर्यगर्विता यथा ।

कलयति कमलोपमानमक्ष्णोः
प्रथयति वाचि सुधारसस्य साम्यम् ।

युक्ताऽलङ्कारं तनोति विस्तारयति। यद्धि स्वतो न शोभते तस्य-व भूषाकरणं युक्तमयुक्तमन्यस्येति भावः । इति हेतोस्त्वं धन्यतमासि अन्यास्त्वधन्याः । भूषादिविरहात् । त्वं त्वति-शयितधन्या इति किं ब्रवीमीति सोल्लुण्ठवचनम् । यद्वा धन्य-तमासीति किं कुत्सितं ब्रवीमि तस्मादधन्यतमा ऽसीत्यर्थः । अत एव तदेवाह सखि तनुनयनान्तरालभीरुः । तनुरङ्गं ममेति भावः । नयनं नेत्रं तदीयमिति भावः । तयोरन्तरालं व्यव-धायक ततो भीरुर्भयशीलः । भूषणमपि मद्विलोकनाऽन्तरायं मन्वान इत्यर्थः । यद्वा तनु स्वल्पमपि नयनान्तराल दर्शन-व्यवधायकं यत्किं चित्तत्र भीरुस्तदमहमान इत्यर्थः । तनुपदं कमनीयतां ध्वनयति। नयनपदं दर्शनलालसतां व्यञ्जयति । भी-रुपदमत्यन्ताऽऽसक्तिम् । कान्तः प्रियः । कान्तपदेन कमनीयता व्यज्यते । मे वपुषि विभूषणानि अलङ्करणानि वहुवचनं नाना-ऽलङ्करणसमर्थतां कान्तस्याभिद्योतयति । न कलयति धारयति। अत्रोक्तरीत्या यथा मयि प्रेम तथा न त्वयीति त्वत्तोऽहं धन्यतमेति स्वाऽऽधिक्यख्यापनाद्व्यतिरेकाऽलङ्कारः । 'उपमा-नाद्यदन्यस्य व्यतिरेकः स एव स' इति तल्लक्षणात् । पुष्पि-ताग्रावृत्तम् ॥ ३४ ॥

कलयति । विचारयति । एवं चैतादृशविचारमात्रकारिण्येतावा-ञ्छकोपः किं पुनस्तथा वक्तरीति व्यज्यते । निरुपमानयोरक्ष्णोः

सखि कथय किमाचरामि कान्ते
समजनि तत्र सहिष्णुतैव दोषः ॥ ३५ ॥

द्वितीयामुदाहरति कलयतीति । का चित्सखीं वक्ति । हे सखि कान्ते प्रेयसि कान्तपदं तिरस्काराऽयोग्यतां व्यनक्ति । अक्ष्णोर्नेत्रयोः । ममेति भावः । कमलोपमानं साम्यम् । कमलपदं सरम्यतां दीर्घतां च ध्वनयति । कलयति । एवं चैतादृशवि-चारमात्रकारिणा एतादृशकोपकरणं किं पुनस्तथावचनादा-विति व्यज्यते । वदति सतीत्यर्थः । कमलस्य निरुपमानयोर्म-न्नयनयोरुपमानत्वेन पराऽपेक्षया कमलस्य प्रसिद्धत्वं गुणोत्कर्ष-शालित्वं चागतमिति कथमयुक्तमनेन विभाव्यते इति क्लेशदा-तृत्वं व्यज्यते । तेन च साऽपराधत्वं तेन च दण्डाऽर्हत्वम् । तथा वाचि सुधारसस्याऽमृतद्रवस्य । रसपदं मधुरिमाऽतिशयं व्यञ्ज-यति । साम्यं तुल्यत्वम् । प्रथयति प्रख्यापयति सतीत्यर्थः । अत्रापि पूर्ववदेव व्यङ्ग्यम् । के ते वराके यन्नयनवचनयो-रुपमानत्वं लक्ष्यते विपरीतत्वं युक्तमिति भावः । उक्तं च ।

गुणोत्कृष्टं प्रसिद्धं यदुपमानं तदुच्यते ।
न न्यूनमुपमैव स्यादतयोस्तुल्यतोपमा ॥ इति ।

रुपमानत्वेन कल्पनात् क्लेशदातृत्वम् । तेन साऽपराधत्वम् । तेन दण्डार्हत्वम् । सुधारसस्येति । तेन माधुर्याऽतिशयस्साम्य प्रथयति । पूर्ववदत्र व्यङ्ग्यम् । के ते वराके यन्नयनवचनयोरुपमानत्वं लक्ष्यते विपरीतत्वं युक्तमिति भावः । ईदृशाऽपकर्षाऽऽपादनकारिणि सखि किमाचरामि किं विधेयं तदुपदिशेत्यर्थः । आस्तां वा तावदेव तत्स-हिष्णुतैव तदीयतादृशविचारसहनशीलत्वमेव दोषः । सर्वत्र गु-णरूपाया अपि तस्या अत्र दोषत्वमिति चित्रमिति भावः ॥ ३५ ॥

मानवती यथा । प्रियाऽपराधसूचिका चेष्टा मानः । स च लघुर्मध्यमो गुरुश्च । अल्पाऽपनेयो लघुः । कष्टतराऽपनेयो मध्यमः । कष्टतमाऽपनेयो गुरुः । असाध्यस्तु रसाऽऽभासः । परस्त्रीदर्शनादिजन्मा लघुः । गोत्रस्खलनादिजन्मा मध्यमः । अपरस्त्रीसङ्गजन्मा गुरुः । अन्यथासिद्धकुतूहलाद्यपनेयो लघुः । अन्यथावादशपथाद्यपनेयो मध्यमः । चरणपातभूषणदानाद्यपनेयो गुरुः ।

एवमपकर्षापादनकारिणि किमाचरामि किं प्रतिसन्धेयं विचारयामि तत्कथयोपदिश । आस्तां वा तावदेषा विचारणा । तत्र तस्मिन् अनुचितविचारकारिण्यपि कान्ते सहिष्णुत्वेन तदीयतादृशविचारसहनशीलत्वमेव दोषः । सर्वत्र गुणरूपाया अप्येतस्या अत्र दोषत्वमिति चित्रमिव । दोषपद भ्रान्तिजनकतां गमयति । समजनि सञ्जातः । उपसर्गेण विशेषदर्शनाऽनन्तर्यत्वं व्यज्यते । पुष्पिताग्रावृत्तम् ॥ ३५ ॥

मानवतीं लक्षयितुमाह । मानवतीत्यादि । प्रियाऽपराधज्ञापकचेष्टागम्यकोपवत्त्व तद्वत्त्वमेव वा लक्षणम् । तस्य त्रैविध्यमित्याह । स चेति । क्रमेण तल्लक्षणान्याह अल्पापनेय

प्रियाऽपराधेति । एवं च प्रियाऽपराधज्ञापकचेष्टागम्यकोपवत्त्वं लक्षणम् । गोत्रस्खलनेति । सपत्नीनामोच्चारणमित्यर्थः । अन्यथेति । प्रकारान्तरसिद्धकुतूहलाऽपनोद्य इत्यर्थः । अन्यथावादः अपलापोक्तिः ।

अपरस्त्रीदर्शनादिजन्मा यथा ।

स्वेदाऽम्बुभिः क्व चन पिच्छिलमङ्गभूमौ
शातोदरि क्व चन कण्टकितं चकास्ति ।
अन्यां विलोकयति भूषयति प्रियेपि
मानः क्व दास्यति पदं तव तन्न विद्मः ॥ ३६ ॥

इत्यादि । कष्टतर इति द्व्यर्थे द्विवचनविभज्येति तरप् । कष्टतम इति वहुत्वे ऽतिशायने तमविष्ठनाविति तमप् । उक्तं च ।

स प्रायशो भवेत्त्रेधा कामिनीनां प्रियं प्रति ।
अवेक्ष्य दोषमेतस्य गरीयान् मध्यमो लघुः ॥ इति ।

नन्वमाध्योप्येकास्तिष्ठति स नोक्त इत्यतो न्यूनत्वमित्यत आह । असाध्य इति । मो ऽलीक एवेति भावः । तत्कारणान्याह अपरस्त्रीत्यादि । गोत्रस्खलनमिति । सपत्नीनामोच्चारणमित्यर्थः । तस्याऽपनोदकान्याह अन्यथासिद्धेति । प्रकारान्तरसिद्धं यत्कुतूहल तेनाऽपनोद्य इत्यर्थः । अन्यथावादेति । अपलापोक्तिरित्यर्थः ।

अन्यां पश्यति आलापं कुर्वत्यपि सति नायके । हे शातोदरि प्रतेनोदरमध्येपि मानस्याऽवस्थानस्थल नास्तीति ध्वन्यते । भूषयतीति पाठे अलङ्कुर्वतीत्यर्थ । न केवलं विलोकनकारित्वं मयि महदपराधकारण तद्वत्त्वे सत्यपि यदीयमवस्था तर्हि किं वक्तव्यमलङ्करणमात्रे इति भाव । क्वचित्पिच्छिलम् । क्वचित्कण्टकिनम् । न मानस्य पददानस्थानमिति भाव । साऽऽगस्यपि प्रेयस्यनुरागेण स्वेदादिभिर्व्याप्तन चाङ्गे मानस्य पददानार्थमपि स्थानं नास्तीति भावः । अन्यथासिद्धकुतूहल स्फुटम् ॥ ३६ ॥

तत्राद्यवतीमुदाहरति। स्वेदाऽम्बुभिरिति। का चित्प्रियनर्मसखी नायिकां प्रति वक्ति। हे शातोदरि शातोदरीति सम्बुद्धिपदोपादानमुदरमध्येऽपि मानस्याऽवस्थानस्थलं नास्तीति व्यञ्जयति। प्रिये प्राणेश्वरे प्रियपदं तत्कृताऽपराधगणनाकरणौचित्यं ध्वनयति। अन्यां पराम्। अन्यपदमगणनीयतां व्यनक्ति। विलोकयति विभूषयत्यपि विलोकनकारिण्यपि न केवलं विलोकनकारित्वमात्रमपि तु अलङ्करणकारित्वमपि महदपराधे कारणं तद्वृत्ते ऽपीत्यपि शब्दार्थः। सतीति शेषः। एतद् दृश्यमानम्। एतत्पदं पिच्छिलत्वाद्यपलापकारणाऽनौचित्यं ध्वनयति। अङ्ग शरीरम्। अङ्गपदं स्वल्पत्वं द्योतयति। एकवचनं च तदतिशयम्। क्व चन क्वापि प्रदेश इत्यर्थः। किमः सप्तम्यन्तात्किमोऽत् क्वेति क्वादेशः। सप्तम्यर्थे ऽव्ययमेतत्। स्वेदाम्बुभिः स्वेदोदबिन्दुभिः। बहुवचनं पिच्छिलताऽतिशयं गमयति। पिच्छिलं पङ्किलम्। पिच्छाऽन्यस्य सन्तीत्यर्थे लोमादिसूत्रेणेलच्। पिच्छिलपदेन पदाऽवस्थानाऽनर्हत्वं ध्वन्यते। तथा क्व चन क्वापि प्रदेशे कण्टकितं सञ्जातकण्टकम्। प्रियपदश्रवणमात्रसञ्जातप्रमोदोदयेनेत्युभयत्र भावः। तदस्य सञ्जातमित्यादिनेतच्। कण्टकितपदेन पददानाऽनर्हत्वं व्यज्यते। चकास्ति शोभते। रम्याणां विकृतिरपि श्रियं तनोतीति भावः। विवक्षितं वक्ति तव मानोऽभिमानः क्व कस्मिन्प्रदेशे पदमङ्घ्रिं दास्यति तत्स्थलं न विद्मः न जानीमः। सापराधेऽपि प्रिये ऽनुरागेण स्वेदादिभिर्व्याप्ते तवाऽङ्गे मानस्य पदमपि दातुं न पश्यामि स्थलमित्यर्थः। एकत्र पिच्छिलत्वादपरत्र कण्टकितत्वादिति भावः। अत्राऽन्यथासिद्धकुतूहलाद्यपनेयत्वं स्फुटम्। वसन्ततिलकावृत्तम्॥ ३६॥

गोत्रस्खलनादिजन्मा यथा ।

यद्गोत्रस्खलनं तत्र भ्रमो यदि न मन्यसे ।
रोमालिव्यालसंस्पर्शं शपथं तन्वि कारय ॥ ३७ ॥

उद्देशक्रमाद्गोत्रस्खलनजन्यमानवतीमुदाहरति यद्गोत्रेति । कोऽपि स्वकृतगोत्रस्खलनकुपितां प्रियतमां सान्त्वयितुं वक्ति । कान्ते इति सम्बुद्धिरध्याहर्तव्या । तदनुपादानं च स्वकृताऽपराधतया सम्भ्रमाऽतिशयमावेदयति । यद्गोत्रस्खलनं त्वत्सपत्नीनामोच्चारणं मया कृतमिति भावः । गोत्रे नाम्नि कुले गोत्रमित्यमरः । तत्र तस्मिन्विषये अथ च गोत्रस्खलनं तत्पर्वतस्खलनमेव । अत एव भ्रमजन्यत्वम् । एवं च यथा बुद्धिपुरःसरं न कस्यापि पर्वतभेदनमिति भावः । एवं चाऽऽकस्मिकतादृक्कार्येण त्वस्मिन्नगतजीवप्रायत्वं व्यज्यते । भ्रमो यदि न मन्यसे । यन्मया नामोच्चारणं कृतं तत्त्वदीयभ्रान्त्या न तु त्वत्सपत्न्या इति भ्रमेणेत्यर्थः । इदं च मद्वचनमसत्यं मन्यसे चेत्तर्हि रोमालिव्यालसंस्पर्शम् । रोमालिः रोमश्रेणिः स एव व्यालः सर्पः तस्य संस्पर्शरूपं शपथं दिव्यरूपं तत्र विप्रतिपन्ने ऽर्थे कारय । रोमालिपदं श्यामत्वं व्यञ्जयति तच्च विषाऽतिशयवत्त्वं तदपि दुःस्पर्शनीयत्वम् । व्यालपदं सा-

स्वकृतगोत्रस्खलनकुपितां नायिकां सान्त्वयितुमाह गोत्रेति । यद्गोत्रस्खलनं त्वत्सपत्नीनामोच्चारणं तत्र भ्रमः त्वदीयनामग्रहणं भ्रम कारणमित्यर्थः । यद्येतन्न मन्यसे मद्वचनमसत्यं मन्यसे चेत् । रोमावलिरूपसर्पस्पर्शं कारयेति । रोमालिपदेन श्यामत्वं तेन विषाद्यतिशय तेन दुःस्पर्शत्वं व्यालपदेन साहजिकक्रूरत्वं कारयेति स्वस्याः पराधीनतां व्यञ्जयति ॥ ३७ ॥

अपराऽङ्गनासङ्गमजन्मा यथा।

दयितस्य निरीक्ष्य भालदेशं
चरणाऽलक्तकपिञ्जरं सपत्न्याः।

हाजिकक्रूरत्वं ध्वनयति। समित्युपसर्गो मणिमन्त्रादिकपटविरहं गमयति। शपथपदं सर्वपरिहारमौलिभूतत्वं गमयति। कारयेति पदमतिशयितं स्वत एव तन्निवारणकरणौचित्येऽपि पराधीनतामावेदयति। सा च मत्कृतनामोच्चारणस्य न सपत्नीविषयकत्वं मन्तव्यमिति। रोमालिव्यालिसंस्पर्शमिति पाठमाश्रित्य रोमालिरूपा या व्याली व्यालस्त्री ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वः। तस्याः स्पर्शम्। एवं च स्त्रीत्वेन त्वत्समजातीयतया त्वत्पक्षकारित्वेऽपि स्पर्शोन्मुखत्वेनाऽतिशुद्धत्वं व्यज्यते इति कश्चित्। अत्र शपथाद्यपनेयत्वं स्फुटमेव। पथ्यावक्त्रं वृत्तम्॥ ३७॥

अपराऽङ्गनासङ्गजन्यमानवतीमुदाहरति दयितस्येति। दयितस्य कान्तस्य। दयितपदं तत्कृताऽपराधस्य दुःखाऽतिशयजनकत्वं व्यञ्जयति। भालदेशं ललाटपट्टम्। भालपदमुत्तमत्वमावेदयति। देशपदं विशालतां द्योतयति। सा चाऽसन्तपदमङ्कटन तच्चाऽतिप्रेमाणम्। सपत्न्याः। सपत्नीपदं स्वाभाविकेर्ष्यावत्त्वं द्योतयति। चरणाऽलक्तकपिञ्जरम् पदसम्बन्धिलाक्षारसबभ्रुवर्णम्। उत्तानरतकरणेन चरणसम्पर्का-

पिञ्जरं पिङ्गम्। उत्तानरतकरणेन चरणसंपर्कादिति भावः। यद्वा तदीयमानाऽपनयनाय नमस्कारेण शिरश्चरणसंयोगादिति भावः। पिङ्गमित्येव पाठो युक्तः। अलक्तकस्य पीतत्वाऽभावात् पिञ्जर-

सुदृशो नयनस्य कोणभासः
श्रुतिमुक्ताः शिखरोपमा बभूवुः ॥ ३८ ॥

दिति भावः । निरीक्ष्य सम्यगवलोक्य सुदृशो नायिकायाः । श्रुतिमुक्ताः कर्णोपान्तप्रेरिताः । कोपेन वक्रविलोकनादिति भावः । नयनस्य नेत्रस्य प्रियं प्रति प्रेरितस्येति भावः । कोणभासः । प्रान्तदीप्तयः । कटाक्षदीप्तय इति यावत् । तिर्यग्विलोकनम् । एकस्यैव प्राधान्येन प्रेक्षणसम्बन्धान्नयनस्येत्येकत्वम् । शिखरोपमाः शिखरेण पद्मरागेण । शिखरः पद्मरागः स्यादिति विश्ववैजयन्ती । 'तन्वी श्यामा शिखरदशने'ति मेघदूतप्रयोगः । शिखर दाडिमीवीजमित्यपि कश्चित् । उपमीयते आरक्तत्वादिति भावः । तथा बभूवुः सपन्नाः । कोपेनेति भावः । कोणभासा इति पाठे आरक्तकटाक्षदीप्त्या श्रुतिमुक्ताः नायिकाकर्णसम्बन्धिमुक्ताफलानि । यद्वा श्रवणभूषणयोग्यमुक्ताफलानि अर्थान्नायकेन स्वाऽपराधक्षमापनायाऽऽनीतानि पद्मरागतुल्यानि जातानीत्यर्थः । एवं च भूषणदानाद्यपनोद्यत्वं द्योत्यते । यद्वा श्रुतिमुक्ताः । अर्था-

मित्ययुक्तमिति कश्चित् । श्रुतिमुक्ता. शिखरोपमा. कर्णोपान्तप्रेरिता कोपेन वक्रनिरीक्षणादिति भाव । नयनस्य प्रियं प्रति प्रेरितस्य कोणभास प्रान्तदीप्तय कटाक्षदीप्तय इति यावत् । तिर्यग्विलोकने एकस्यैव प्रेक्ष्यसम्बन्धान्नयनस्येत्येकवचनम् । शिखरेति । पक्वदाडिमवीजाभं माणिक्यं शिखरं मतम् । कोपेनेति भावः । कोणभासा इति मुक्ताफलानि जातानि तथेति भावः । यद्वा श्रुतिमुक्ताः नायिकाकर्णमुक्ता कुपितकामिनीनयनदीप्त्या रक्ता इत्यर्थ. । एतेन चरणपाताऽपनोद्यत्व पूर्वव्याख्यायां भूषणदानाऽपनेयत्वम् ॥ ३८ ॥

एताः षोडशाप्यष्टाभिरवस्थाभिः प्रत्येकमष्टविधाः। प्रोषितभर्तृका खण्डिता कलहान्तरिता विप्रलब्धा उत्का वासकसज्जा स्वाधीनपतिका अभिसारिका चेति गणनादष्टाविंशत्यधिकं शतं भेदा भवन्ति। तासामप्युत्तमाऽधममध्यमभेदगणनया चतुरधिकाऽशीतियुतं शतत्रयं भेदा भवन्ति।

त्पदाऽवनतनायककर्णाभरणरूपाः कुपितकामिनीनयनदीप्त्या रक्ता जाता इत्यर्थः। एवं चरणपाताद्यपनोद्यत्वं ध्वन्यते। ये तु शिखरेण गिरिशृङ्गेणोपमीयन्ते श्यामत्वादित्याहुस्तत्कुपितकामिनीनयनदीप्तेः श्यामत्ववर्णनाऽनौचित्येनाऽनुचितमाभाति। अत्र तादृशव्यापनरूपवस्तुना नायिकायाः सागसि प्रेयसि कोपाऽभिव्यक्तिरूप वस्तु व्यज्यते। मालभारणीयोवृत्तम्॥ ३८॥

प्रसङ्गादेतासां भेदान्तराणि निरूपयितुमाह। एता इति। षोडशेति। मध्याप्रगल्भयोः प्रत्येक धीरादिभेदानां ज्येष्ठाकनिष्ठत्वेन द्वैविध्ये द्वादश मुग्धा एकैवेति मिलितत्र-

षोडशेति। मध्याप्रगल्भयोः प्रत्येकं धीरादिभेदानां ज्येष्ठाकनिष्ठत्वेन द्वैविध्ये द्वादश। मुग्धा एकैव। एवं त्रयोदशभेदवती स्वीया। द्विधा पराङ्गना। सामान्यवनिता त्वेकैवेति षोडशेत्यर्थः। चतुरधिकाशीतीति। न एतदाधिक्यव्यवच्छेदक किं तूक्तगणनमात्रम्।

जातिकालवयोऽवस्थाभावकन्दर्पसायकैः।
इतरा अप्यसङ्ख्याता नोक्ता विस्तरभीतितः॥
इति प्राचीनोक्तेरन्येषामपि सत्त्वादित्याहुः।

यत्त्वेतासां दिव्याऽदिव्योभयभेदेन गणनया द्विपञ्चाशदधिकशतयुतं सहस्रं भेदा भवन्ति । दिव्या इन्द्राण्यादयः । अदिव्या मालत्यादयः । दिव्याऽदिव्याः सीतादय इति । तन्न । अवस्थाभेदेनैव नायिकानां भेदात् । जातिभेदेन भेदस्वीकारे नायकानामप्येवमानन्त्यं स्यात् । तथा भेदा नायकानामपि सन्ति । इन्द्रादयो

षोडशभेदवती स्वीया । द्विविधा पराङ्गना । सामान्यवनिता त्वेकविधेति षोडशेत्यर्थः । अवस्थाभेदमेवाह । प्रोषितेत्यादि । तामामिति । पूर्वगणितानामित्यर्थः । चतुरधिकाशीतियुतमिति । परिगणनमेतत् नाधिक्यव्यवच्छेदकम् ।

जातिकालवयोवस्थाभावकन्दर्पसायकैः ।
इतरा अप्यसङ्ख्याता नोक्ता विस्तरभीतितः ॥
इति प्राचोक्तेरन्येपि भेदा अध्यवसेयाः ।

कस्य चिन्मतं दूषयितुमनुवदति यत्त्विति । एतासामनन्तरपरिसङ्ख्यातानां दिव्यात्वं तद्देशीयत्वमुपाधिरूपं सामान्यं हेतुमाह । अवस्थाभेदेनवेति । कालिकविशेषेणेवेत्यर्थः । वि-

अवस्थाभेदेनेति । कालिकाऽवस्थयैवेत्यर्थ । एवकारेण जात्यादिभेदव्युदास । हेत्वसिद्धिमाशङ्क्याह । जातीति । उपलक्षणमेतद्देशादीनामनन्तनायकानां जातिभेदभिन्नानाम् । तत्रैवोपष्टम्भकान्तरमाह । तथेति । यदि जात्यादिभेदेन नायिकाऽऽनन्त्यं स्यात्तर्हि तथा तद्वदेव नायकानामपि दिव्याऽदिव्यभेदसम्भवादानन्त्यं स्यादित्येवं दिव्यादिव्यभेदेनाऽनन्तानां खण्डितत्वादिक स्यात युक्तेस्तुल्यत्वात् । यथा प्राचीनैरनुदाहृतत्वान्नैते भेदा नायकानां तथा न नायिकानां जात्यादिभेदनिबन्ध-

दिव्याः। अदिव्या माधवादयः। दिव्याऽदिव्या अर्ज्जुनादय इति। यद्यपि मुग्धाया यथा धीरादिभेदाऽभावस्तथाविधप्रज्ञासामग्र्यभावात् तथा ऽत्राप्यष्टविधत्वाऽभावो

शेषः कालिकाऽऽवस्थेत्यमरः। एवकारो जात्यादिभेदकव्युदासः। हेत्वसिद्धिपरिहारायाह। जातिभेदेनेति। जातिरित्युपलक्षक देशादीनाम्। तत्रैवोपष्टम्भकान्तरमाह। तथेति। अन्यदपीत्यर्थः। अयं भावः। जात्यादिभेदेन भेदे नायिकानन्त्यं स्यात्तथा नायकेष्वपि दिव्यादिभेदसम्भवादानन्त्यं स्यात्। एवं दिव्यादिभेदवत् खण्डितत्वादिकमपि नायकानां स्यात् युक्तेस्तुल्यत्वात्। तस्माद्यथा प्राचीनैरनुदाहृतत्वान्नैते भेदा नायकानां तथा नायकानां न जात्यादिभेदनिबन्धनभेदवत्त्वम्। वस्तुतस्तु वात्स्यायनादिभिर्जात्यादिनापि भेदस्वीकारात् तद्भेदाद्भेदो युक्त एव। तासामानन्त्यं च व्यक्त्यानन्त्यावदोषाय। यच्च नायकानामपि खण्डितत्वादिकं स्यादित्युक्तम्। तच्चाऽनौचित्याद्रसभङ्गापत्त्या पराहतम्। प्राचामनुपन्यासस्तु न दिव्यादिभेदाऽभावसाधकः। अप्रयोजकत्वात्। अत एव जातिकालेत्यादि प्रागभ्यधायि। ननु मुग्धायाः प्रज्ञाविशेषाऽभावात् यथा धीरादिभेदाऽभावस्तथा ऽष्टविधत्वा-

नभेदवत्त्वम्। वस्तुतो वात्स्यायनादिसंमतत्वात् जात्यादिभेदो युक्त एव। तेनानन्त्यं व्यक्त्यानन्त्यान्न दोषाय। यत्तु नायकानामपि खण्डितत्वादिकं स्यादित्युक्तं तच्चाऽनौचित्याद्रसभङ्गापत्त्या पराहतम्। प्राचामनुपन्यासस्तु न दिव्याऽदिव्यभेदाऽभावसाधकः। अप्रयोजकत्वात्। अत एव जातिकालेत्यादि प्रागभ्यधायि। धीरा-

भवितुमर्हति तथापि प्राचीनलेखनाऽनुरोधेन नवोढामालम्ब्यैते भेदा अवगन्तव्याः ।

देशान्तरगते प्रेयसि सन्तापव्याकुला प्रोषितभर्तृका । उत्काकलहान्तरिताविप्रलब्धानां पतिर्देशान्तरगतो न भवतीति न तत्राऽतिव्याप्तिः । अस्याश्चेष्टा दशावस्था, सा त्वग्रे वक्ष्यते ।

मुग्धा प्रोषितभर्तृका यथा ।

दुःखं दीर्घतरं वहन्त्यपि सखीवर्गाय नो भाषते
शैवालैः शयनं सृजन्त्यपि पुनः शेते न वा लज्जया।

भावोपीत्याह । यद्यपीति । उत्तरयति । तथापीति । प्राचीनलेखनानुरोधेनेति । वस्तुतो निर्युक्तिकत्वादयुक्तमिति भावः ।

तत्र प्रथमोद्दिष्टत्वात् प्रोषितभर्तृकां लक्षयति । देशान्तरगतेति । देशान्तरगतप्रियविरहसन्तापवत्त्वमित्यर्थः । दशावस्था इति । तास्तु अग्रे वक्ष्यति ।

दिभेदाऽभाव इति । आदिपदान्मानवत्यन्तपरिग्रह । प्राचीनेति । वस्तुनो निर्युक्तिकत्वादयुक्तमिति भाव. । देशान्तरगतप्रियविरहसन्तापवत्त्वं प्रोषितभर्तृकात्वम् ।

दु.खं दीर्घतरमिति । अतिदीर्घं दु.खं वहन्त्यपि सखीवर्गाय नो भाषते ऽम्बुजमुखीत्यन्वय. । दीर्घतरत्वेनाऽनुल्लङ्घनीयत्वम् । वहन्तीति कठिनहृदयतामशक्यप्रतीकारताञ्च व्यनक्ति । सखीति दु.खकथनयोग्यतां वर्गत्वेन तन्निवारणसमर्थताम् । दु.ख विरहजम् । अतिविश्वास्यसखीजनेऽप्यकथनेन लज्जाऽतिशय' । तेन मुग्धात्वम् । तथा जलनीलया आस्तरणं सृजन्त्यपि न निद्राति । लज्जयेति भावः ।

कण्ठे गद्गदवाचमञ्चति दृशा धत्ते न वाष्पोदकं
सन्तापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥ ३९॥

तत्र मुग्धां प्रोषितभर्तृकामुदाहरति दुःखमिति। का चिरकां चिरमत्याह। अम्बुजमुखी कमलमुखी अम्बुजपदमम्लानतां व्यञ्जयति तच्च विरहगोपनम्। दीर्घपदमपि प्रियतमगमनदिनमारभ्यैतत्क्षणावधि। दीर्घतरपदमनुल्लङ्घनीयत्वं ध्वनयति तच्च दुःसहत्वम्। दुःखं विरहजमित्यर्थः। वहन्त्यपि वहन्तीति पदं कठिनहृदयतामशक्यप्रतीकारतां व्यनक्ति। परं तु सखीवर्गाय सखीसमूहाय। सखीपदं दुःखकथनार्हतां द्योतयति। वर्गपदं दुःखनिवारणासमर्थतां गमयति। नो भाषते नो वक्ति। एवं च स्वसर्वरहस्यकथनार्हस्य स्वसखीनिवहस्यापि न निवेदयति दुःखं किं पुनरन्यस्येति लज्जाविशेषवत्त्वं ध्वन्यते। तेन मुग्धात्वम्। किं च शैवालैर्जलनीलयादिभिः। शैवालपदं तापाऽपनोदकतां व्यनक्ति। शयनमास्तरणम्। शयनपदं निविडतां गमयति। सृजन्त्यपि सृजन्तीत्यनेन तत्करणे आदरातिशयो व्यज्यते। पुनः किं तु न शेते न निद्राति। किं च कण्ठे कण्ठपदेन दुःखवशाद्रसनाजाड्यम-

कण्ठेन रसनायां दुःखवशेन तस्या जडत्वात् परं तु दृशोर्वाष्पोदकं न दधाति। उदकपदेन स्खलनाऽनर्हत्वं तेन स्खलनाऽनर्हस्यापि स्खलनेन लज्जालुता ध्वन्यते। एवं विरहज्ञापकवाह्यचेष्टागोपनेऽपि येन प्रकारेण सन्तापं सहते तच्चेतोभवो वेद। चेतोभवपदेन दुःखज्ञानयोग्यता अन्तर्मदनस्यैवेति ध्वन्यते। क्वचित्तु वहति सृजतीत्यपि पाठः॥ ३९॥

मध्या प्रोषितभर्तृका यथा ।

वासस्तदेव वपुषो वलयं तदेव
हस्तस्य सैव जघनस्य च रत्नकाञ्ची ।

भिव्यज्यते । तेन च तत्करणे आदरातिशयो ऽवगम्यते । गद्गदवाचम् स्खलितां गिरं सवाष्पत्वादिति भावः । अश्नाति दधाति । एवं च वाच्यस्फुटत्वमभिव्यज्यते । परं तु दृशा दृष्ट्या । एकवचनेन विविधविलोकनाऽभावेन चिन्ताऽतिशयो व्यज्यते । वाष्पोदकम् अश्रुजलम् । उदकपदेन स्थगनाऽनर्हत्वं व्यज्यते । न धत्ते न दधाति । एवं च स्थगनाऽनर्हस्यापि स्थगने ऽतिलज्जालुत्वं द्योत्यते । एवं विरहज्ञापकबाह्यचेष्टागोपनकारिणी यत् येन प्रकारेण सन्तापं विरहदाह सहते तत्तं प्रकारं चेतोभवो मदनः वेद जानाति न त्वन्य इति भावः । सहते इति पदेन दुःसहत्वं गम्यते । चेतोभवपदेन हृदयसन्निहितत्वं तेन च सहनप्रकारज्ञानवत्त्वमावेद्यते । विशेषोक्तिरलङ्कारः । लक्षणं तूक्तम् । शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

मध्याधीराज्येष्ठां प्रोषितभर्तृकामुदाहरति वास इति । का चित्सखी नायिकां वक्ति । हे सखि वपुषो देहस्य वासो वसनं तदेव पूर्वगृहीतमेव । वासःपदमल्पभारत्वमावेदयति । एवं च सार्वकालिकदेहसम्बन्धित्वमनसङ्गाव खेदवत्ता असम्भाविनीति ध्वन्यते । एवमग्रेऽपि । तथा हस्तस्य करस्य वलयं कङ्कणम् । तदेव वलयपदं खेदाऽजनकत्वं व्यनक्ति ।

वासस्तदेवेति । तत्तच्छब्दाः पूर्वगृहीतार्थकाः । तैश्च सार्वदि-

वाचालभृङ्गसुभगे सुरभौ समस्त-
मद्याऽधिकं भवति ते सखि किं निदानम् ॥ ४० ॥

तथा जघनस्य नितम्बस्य सैव पूर्वपरिगृहीतैव रत्नकाञ्ची मणिगणराजिरञ्जिता रशना। यान्येव पूर्वं परिगृहीतवती वसनादीनि तान्येवैतानि संप्रति दधासीत्यर्थः। वाचालभृङ्गसुभगे वाचालाः कुत्सितबहुभाषिणः। आलजाटचौ बहुभाषिणीति कुत्सार्थे आलच्। कुत्सितत्वं विरोधिविषयकत्वेनाऽसह्यत्वेन वा। ये भृङ्गा भ्रमरास्तैः। भृङ्गपदं मदनोद्दीपकत्वं व्यनक्ति। सुभगपदं सामर्थ्यविशेषमभिव्यञ्जयति। तच्चाऽनिवार्यत्वं व्यनक्ति। सुरभौ पुष्पसमये। वसन्ते पुष्पसमयः सुरभिरित्यमरः। सुरभिपदमुन्मादकत्वं द्योतयति। अद्येदानीमेव समस्तं वसनादिकं ते तवाऽधिकम् असह्यं भवति तत्र किं निदानं कारणं तत्कथयेत्यर्थः। एवं चैतादृशोत्सवसमये सुखवत्तया भवितव्यं तदभावे प्रत्युत दुःखवत्त्वे किं बीजं तन्न विद्म इति भावः। तव न मम। तेनाऽस्मदादिवैलक्षण्यमवश्यं सहेतुकमे-

कदेहसम्बन्धात् खेदवत्ता असम्भाविनीति व्यज्यते। वाचालभृङ्गसुभगं विरहपीडाजनकतया तद्वाच. कुत्सितत्वम्। तेषां वाचालत्वं सुभगत्वं गीतकीर्तित्वम्। सुरभौ वसन्ते तेनोन्मादकत्वं व्यज्यते। अधिकमित्यनेन परिहरणीयत्वम्। तादृशस्याप्यपरिहारेण लज्जावत्वं किं निदानमिति च स्वतोऽकथनात् प्रश्नकथनेन तदेव द्रढयति। किं च सुरभिसमयात्पूर्वं लज्जावशात् विरहगोपनाय वसनादिधारणं कृतवती सम्प्रति तु तदेव विषमविषमिवाऽसह्यमाना जातेति लज्जामदनसाम्यमभिव्यज्यते ॥ ४० ॥

वेति व्यज्यते । समस्तपदैनैकमपि न सुखजनकमिति व्यज्यते तेन तत्कारणगवेषणाऽऽवश्यकत्वम्। अधिकपदं दुष्परिहरणीयत्वं व्यञ्जयति तच्च लज्जावत्त्वम् । किं निदानमिति च स्वतोऽकथनात्प्रश्नकरणेन तद्वृत्तमेव बोधयति । निखिलेन च वसन्तसमयात्पूर्वं लज्जावशाद्विरहगोपनाय वसनादिधारणं कृतवती, प्राप्ते तु विषमशरोद्दीपनकारिणि विविधकुसुमसमूहसौरभ्यलुब्धमधुकरसञ्चारिणि विरहिजनधैर्यवैधुर्यकारिणि चित्तहारिणि वसन्ते मदनमहीपतिबाधानिवारणाऽशक्यतया चिरपरिचितमपि वसनादि विषमं विषमिवाऽसहमाना सञ्जातेति लज्जामदनसाम्यमभिव्यज्यते । अथ च सुरभौ सदा सुगन्धशालिनि नायके वाचालभृङ्गसुभगे वाचालस्य सपत्नीजनस्य । एवं च वचनरचनाविशेषेण नायकस्वाधीनीकरणसामर्थ्यं व्यज्यते । ये भृङ्गाः कटाक्षास्तैः सुभगे विरूपातविभवे । अर्थाद्देशान्तर गते सति । अत्र सर्वं वासआदिकं ते इति तव नाऽपराधा न्यूनस्नेहत्वादित्यर्थः । एवं चैतस्यामधिकस्नेहवत्त्वेन ज्येष्ठात्वं ध्वन्यते । अधिक भवति अत्र किं निदानं न किमपि । स्फुटत्वादित्यर्थः । एवं च साऽपराधस्यापि नायकस्य विदेशगमने आवश्यकवसनादिधारणाऽलसतया व्यङ्ग्यदुःखप्रकाशकत्वेन धीरात्वं ध्वन्यते । एवं चोदाहरणसङ्गतिरप्यूह्या । ऋजवस्तु विशिष्टं भेदमात्रमभिधाय ग्रन्थगौरवभयादन्योदाहरणान्युत्सृज्य सामान्यतो मुग्धामध्याप्रगल्भापरकीयासामान्यवनितानामुदाहरणोपन्यास इति वदन्ति । अत्र नर्मस्फोटालङ्कारः । वसन्ततिलकावृत्तम् ॥ ४० ॥

प्रौढा प्रोषितभर्तृका यथा ।

माला बालाऽम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची याते प्रभवति हरौ सुभ्रुवः प्रस्थितैव ।

प्रौढां धीराज्येष्ठाप्रोषितभर्तृकामुदाहरति मालेति । का चिन्नायिकावृत्त कां चित्प्रत्याह । सुभ्रुवो नायिकायाः बालाऽम्बुजदलमयी बालानि नवोदितानि यान्यम्बुजानि कमलानि तेषां दलानि पत्राणि प्राचुर्येण यस्यां तत्प्रकृतवचने इति मयट् । माला दाम । मालापदं प्रकृतिभीरुत्वं तच्च स्वाश्रयसुतनुतापदर्शनसमयमेव प्रस्थानाऽर्हतां व्यञ्जयति। तथा बालपद कोमलत्वं तच्च सुतनुतनुतापशोषाऽर्हत्वं ध्वनयति । अम्बुजपद जलजन्यतया नवप्रश्वासप्रोत्सारणार्हतां गमयति। किं च मौक्तिकी मुक्तासम्बन्धिनी हारयष्टिर्हारलता मौक्तिकीति तापोपशमनसामर्थ्येऽपि तद्भीतितः प्रस्थानकरणे सुतनुसन्तापाऽतिशय व्यनक्ति । दलपदं सूक्ष्मतां सा चेपत्सुतनुसन्तापश्वासप्रोत्सारणाऽर्हतां गमयति । मौक्तिकीतिपदेन शीतलस्वभाववत्त्वं तद्वत्त्वे ऽप्यसह्यमानत्वेन विरहाऽतिशयो व्यज्यते । हारपदेन बहुधा ऽङ्गसङ्गशालित्वं त-

मालेति । पद्मदलमाला विरहदाहे कोमलकमलसम्बन्धे ज्वालाजालमिव स्यादिति भावेन तत्त्यागः । अनुक्षणं क्षीयमाणाऽङ्गतया बहुसामर्थ्येन हारादित्याग. । बालपदेन कोमलत्वं मुक्तापद्मानां शीतलत्वेपि तत्त्यागेन विरहाऽतिशयो ध्वन्यते । एवं मालेत्यादिस्त्रीलिङ्गेन नायिकासजातीयत्वात् त्यागाऽनौचित्येपि त्यागेपि स एव । यद्वा भीरुत्वम् । तेन प्रस्थानौचित्यम् । हरौ गते स्वाश्रयनाशो ऽवश्य-

अन्यद् ब्रूमः किमिह धमनी वर्तते वा न वेति
ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥ ४१ ॥

त्त्वेपि त्यागेन तस्मिन् स एव द्योत्यते। किं च काञ्ची रशना। मालेत्यादिस्त्रीलिङ्गनिर्देशेन नायिकासजातीयत्वेन त्यागाऽनौचित्येपि तत्करणेन विरहाऽतिशयो व्यज्यते। यद्वा भीरुत्व तेन प्रस्थानौचित्यं गमयति। याते गते। गते इति प्रस्थितेपि तस्मिन् स्वाश्रयभूततनुतनुनाशो ऽवश्यम्भावीत्याशयो व्यज्यते। यद्वा भीरुत्वम्। रत्नादिभिरपि प्रस्थानीकृतमिति भावः। विरहदाहे कोमलकमलसम्बन्धिज्वालाजालमेव स्यादिति मालात्यागः। अनुक्षण क्षीयमाणाऽङ्गतया भारवहनाऽसमर्थत्वेन हारादित्यागः। अन्यच्च किं ब्रूमः बाहोर्वलयं हस्तसम्बन्धि कङ्कणम्। धमन्यपि। नाडी तु धमनी शिरेत्यमरः। वर्तते तिष्ठति वा न वेति ज्ञातुमिव। अहह खेदे। पाणिमूलं हस्तमूलं प्रयाति गच्छति। बाहोरिति षष्ठ्या स्वाश्रयबाहुसम्बन्धिशिरागवेषणस्यौचित्यं ध्वन्यते। अपिना बहिरङ्गमालादिकस्य निर्गतत्वे ऽन्तरङ्गतया शिराया अपि किमन्तरङ्गतास्ति न वेति गवेषणस्याऽऽवश्यकत्वं ध्वन्यते। अन्योपि कश्चिद्वैद्यः करस्य प्राणप्रयाणसमये शिरागवेषणं कुरुते इति लौकिकम्। अत्र प्रागल्भ्य स्फुटमेव।

म्भावीति मालादिभिरपि प्रस्थितमिति भावः। पाणेरहह वलयं बाहुमूलं प्रयातीति पाठ। यथास्थितपाठे बाहोर्वलयाऽसम्भवेन तत्स्थानस्य पाणिमूलाऽऽगमने विरहातिशयाऽप्रतीतेरसम्बद्धतैव। किमपि इत्यदपीत्यर्थ ॥ ४१ ॥

परकीया प्रोषितभर्तृका यथा।

श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते
सद्यो मर्मरशङ्कया न च तया संस्पृश्यते पाणिना।

अथ च प्रभवति समर्थे। एवं चाऽपराङ्गनादर्शनादिकारणनिवारणाऽनर्हत्वं व्यज्यते। एवं चैतादृशोक्त्या व्यङ्ग्यकोपप्रकाशत्वेन धीरात्वं ध्वन्यते। हरिपद हरति स्नेहाऽऽधिक्येन मन इति व्युत्पत्त्या स्नेहाऽऽधिक्यप्रतिपादनाज्ज्येष्ठात्वं द्योत्यते। प्रोषितपतिकात्वं च स्फुटमेव। एवमेवाग्रे ऽप्युदाहरणसङ्गतिरूह्या। अत्र स्फुटाऽस्फुटयोरुत्प्रेक्षयोः संसृष्टिः। मन्दाक्रान्ता वृत्तम् ॥ ४१ ॥

परकीयां प्रोषितभर्तृकामुदाहरति श्वश्रूरिति। काचिन्नायिकावृत्तं कां चित्प्रसाह। श्वश्रूर्भर्तृमाता यत्पद्मदलं ददाति कौतुकेनेति भावः। तद्दयितया नायिकया भ्रूसंज्ञया भ्रूभङ्गसूचनेनैव गृह्यते। परन्तु पाणिना करेण सद्यस्तत्काल मर्मरशङ्कया। मर्मरः शुष्कपर्णध्वनिः। सो ऽस्त्यास्मिन्निति शुष्कमित्यर्थः। तत्प्रशयेन। अर्शआदित्वादच्। न च संस्पृश्यते। श्वश्रूपदमनुल्लङ्घनीयाज्ञत्वं व्यञ्जयति। पद्मपदं कोमलतां ध्वनयति। ददातीत्यनेन दानस्य बुद्धिपूर्वकत्व व्यज्यते। तदपीत्यनेनाऽनुल्लङ्घनीयाज्ञाश्वश्रूदत्तमपि पद्मदलं न गृह्यते तत्राऽन्यदत्त-

भ्रूसंज्ञया भ्रूभङ्गसूचनेनैव। मर्मरः शुष्कपर्णध्वनिः। सो ऽस्त्यस्येति अर्शआद्यजन्तम्। श्वश्रूपदेनाऽनुलङ्घनीयाज्ञत्वम्। एवं च दत्तमपि न गृह्यते तत्र का वार्ता ऽन्यायत्तस्येति व्यज्यते। मर्मरशङ्कयेत्यनेन किंचित्कालं कराऽवस्थाने भस्मैव स्यादिति ध्वन्यते।

यातुर्वाचि सुहृद्गणस्य वचसि प्रत्युत्तरं दीयते
श्वासः किं तु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा॥४२॥

ग्रहणस्य का वार्तेति द्योत्यते। भ्रूसंज्ञयेत्यनेन लज्जाविशेषप्रदर्शनाद्ग्रहणजन्यकोपपरिहारः स्वस्य प्रतीतत्वादिकं च ज्ञाप्यते। सद्यो-मर्मरशङ्कयेत्यनेन कतिपयकालकमलदलस्य करसम्बन्धे ऽवश्यम्भाविभाव एव स्यादिति द्योत्यते। पाणिनेत्यनेन यत्र पाणिस्पर्शोऽपि न कमलदलस्य तत्र विरहाऽनलोपतप्तहृदयसंनिवेशो दूराऽपास्त इति ध्वन्यते। एवं च प्रच्छन्नकामुकत्वं व्यज्यते। किञ्च यातुर्देवरपत्न्याः वाचि तथा सुहृद्गणस्य सुहृत्समुदायस्य च वचसि प्रत्युत्तरं प्रतिवचनं दीयते। किं तु कुरङ्गीदृशा नायिकया श्वासो निःश्वासः न मुच्यते न प्रेर्यते। यतो हुतवहक्रूरः हुतवहादनलादपि क्रूरः कठिनः। अतिदाहक इत्यर्थः। यातुरित्यनेन सार्वकालिकसङ्गतिमत्तया प्रत्युत्तरदानस्याऽऽवश्यकत्वं ध्वन्यते। सुहृत्पदं प्रत्युत्तरदानौचित्यं गमयति। हुतवहपदं दहनसामर्थ्यं व्यञ्जयति। यातृसुहृत्पदाभ्यामन्यं प्रति प्रत्युत्तराऽभावो द्योत्यते। प्रत्युत्तरमित्येकवचनं प्रत्युत्तरान्तराऽभावं गमयति। निखिलेन परपुरुषविरहगोपनं व्यनक्ति। शार्दूलविक्रीडितं वृत्तम्॥४२॥

यनेन प्रच्छन्नकामुकविषयत्वं ध्वन्यते। यातुर्देवरपत्न्याः सुहृत्समुदायस्य वचसि प्रत्युत्तरं दीयते किं तु श्वासो न मुच्यते। वह्नेरपि क्रूरः। यातृसुहृत्पदेन प्रत्युत्तरदानस्याऽऽवश्यकता अन्यं प्रति प्रत्युत्तराऽभावश्च ध्वन्यते। श्वासत्यागाऽभावेऽपि तासां दाहभीत्या निखिलेन परपुरुषविरहगोपनं व्यज्यते॥ ४२ ॥

सामान्यवनिता प्रोषितभर्तृका यथा ।

विरहविदितमन्तःप्रेम विज्ञाय कान्तः
पुनरपि वसु तस्मादेत्य मे दास्यतीति ।
मरिचनिचयमक्ष्णोर्न्यस्य वाष्पोदबिन्दून्
विसृजति पुरयोषिद् द्वारदेशोपविष्टा ॥ ४३ ॥

सामान्यवनितां प्रोषितभर्तृकामुदाहरति । विरहविदितमिति । काचित्कांचित्प्रति वक्ति विरहविदितं विरहेण वियोगेन विदितं ज्ञातम् । अन्तःप्रेम अन्तर्मनसि प्रेम प्रीतिः तां, ममेति भावः । विज्ञाय यदीयमेवं विरहवती तर्हि मय्यतीव प्रीतिमती स्वविषयकं मत्प्रेम ज्ञात्वेत्यर्थः । कान्तः मे तस्माद्देशान्तरादागत्य पुनरपि पूर्वं तु दत्तमेवेति भावः । वसु द्रव्यं दास्यति वितरिष्यतीति हेतोरित्यर्थः । यद्यपि परकीयस्य विरहस्याप्ययोग्यतया न पुनस्तत्प्रत्यक्षता तथाप्यश्रुपातादिना ऽनुमेयता, तस्य लिङ्गज्ञानैककारणत्वात् । द्वारदेशे प्रतीहारप्रदेशे उपविष्टा निविष्टा । एवं च बहुभिरिदं दृष्टं तस्मै कश्चन कथयिष्यतीति धियेति भावः । एव च वञ्चनानिपुणात्वं व्यज्यते । पुरयोषिद्वेश्या । पुरयोषित्पदेन वास्तवैकनिष्ठप्रेमशून्यत्वं ध्वन्यते । अक्ष्णोर्नेत्रयोः मरिचनिचयं मरिचस-

विरहविदितमिति । विरहज्ञापितमित्यर्थः । अन्तःप्रेम मानसं प्रेम । यदीयमेवं विरहवती तर्हि मय्यतीव प्रेमवतीति मत्प्रेमज्ञेत्यर्थः । द्वारदेशोपविष्टा । बहूनां दर्शने केन चित्तस्मै अपि निवेदनीयमिति धियेति भावः । पुरयोषिदित्यनेन वास्तवैकनिष्ठप्रेमशून्यत्वम् ॥ ४३ ॥

अन्योपभोगचिह्नितः प्रातरागच्छति पतिर्यस्याः सा खण्डिता । प्रातरित्युपलक्षणम् । अस्याश्चेष्टा । अस्फुटाऽऽलापश्चिन्तासन्तापनिःश्वासतूष्णीम्भावाऽश्रुपातादयः ।

मुग्धा खण्डिता यथा ।

वक्षः किमु कलशाऽङ्कितमिति किमपि प्रष्टुमिच्छन्त्याः ।
नयनं नवोढसुदृशः प्राणेशः पाणिना पिदधे ॥ ४४ ॥

मुहुं निक्षिप्य बाष्पोदबिन्दूनश्रुजलबिन्दून् विसृजति प्रकटयति । मरिचानां तिक्तत्वाद्बाष्पोत्पादकत्वमिति भावः । बिन्दूनिति बहुवचनं विरहाऽतिशयप्रदर्शनकारित्वं व्यञ्जयति । काव्यलिङ्गाऽनुप्राणितो ऽपन्हुतिरलङ्कारः । मालिनीवृत्तम् ॥४३॥

अवसरप्राप्तां खण्डितां लक्षयति । अन्योपभोगेति । नन्वन्यकालीनतथाविधपतिकत्वे खण्डितात्वं न स्यात्तथा चाऽव्याप्तिरित्यत आह प्रातरित्युपलक्षणमिति । अन्यकालस्येत्यादि । तल्लक्षणज्ञानाय तस्याश्चेष्टामाह अस्या इत्यादि । अस्फुटाऽऽलापः कोपजबाष्परुद्धकण्ठतया गद्गदवचनम् । चिन्ता तद्बोधस्येत्यादि ।

नन्वन्यकालीने तथाविधागमने खण्डितात्वं न स्यादत आह उपलक्षणमिति । इदमुपलक्षणम् । पतिरित्युपपतेरुपलक्षणं बोध्यम् । अन्यसम्भोगदुःखिताया पराङ्गनासङ्गजन्यमानवत्याःखण्डितायाश्च भेदश्चिन्त्यः । अस्फुटेति । कोपजबाष्परुद्धकण्ठतया गद्गदवचनम् । चिन्ता तद्दोषगवेषणे चित्तैकाग्र्यम् ।

वक्षः किमिति वास्तवान्यनायिकाकुचाभोगचिह्नज्ञानात्पृच्छति किमपि किंचिदीषत् । न तु पृष्टवत्या । लज्जयैवेति भावः । किमपीत्यनेनाऽस्फुटालापः । नयनमित्येकवचनेन विलोकनचिह्नासक्त्यैकरूपतां ध्वनयति ॥ ४४ ॥

मध्या खण्डिता यथा।

वक्षोजचिह्नितमुरो दयितस्य वीक्ष्य
दीर्घं न निःश्वसिति जल्पति नैव किं चित्।

तल्लक्षणज्ञानाय उदाहरणमाह वक्ष इत्यादि । कलशाङ्कितं घटचिह्नितं किमु वितर्कयामीत्यर्थः । मुग्धात्वात् वास्तवाऽन्यनायिकाकुचाभोगचिह्नज्ञानात् इति पूर्वोक्तरीत्या किमपि किं चित्प्रष्टुं प्रश्नं कर्तुमिच्छन्त्याः । लज्जावत्त्वादिति भावः । एवं चाऽस्फुटाऽऽलापो ऽभिव्यज्यते । नवोढसुदृशः नवोढाऽङ्गनायाः नयन नेत्रम् । एकवचनं चिह्नविलोकनासक्त्यैकरूपतयां व्यञ्जयति । प्राणेशो भर्त्ता । प्राणेशपदं तथाविधप्रेमाऽभावं द्योतयति । यद्वा अनिवारणीयत्वम् । पाणिना हस्तेन पिदधे आच्छादयति स्म । उपगीतिर्वृत्तम् ॥ ४४ ॥

मध्यां खण्डितामुदाहरति वक्षोजचिह्नितमिति । का चिन्नायिकावृत्त कां चित्सख्याह । दयितस्य प्रियतमस्य वक्षोजचिह्नितं सपत्नीस्तनमुद्राङ्कितम् उरो वक्षःस्थल वीक्ष्य । दयितपद स्वनिरूपितप्रेमवत्त्वेप्येतादृशाऽनुचिताऽऽचरणकार्य्यकारितया दुःखाऽतिशयजनकत्वं ध्वनयति । चिह्नितपद गाढालिङ्गनमभिव्यञ्जयति । दीर्घमायतं न निःश्वसिति निःश्वासं नोत्सृजति लज्जावशादिति भावः । किं चिदपि ऋजु वक्रं वा नैव जल्पति । नैव

वक्षोजेति । दयितपदं स्वनिरूपितप्रेमवतः ईदृशाऽनुचिताचरणकर्तृतया दुःखाऽतिशयं ध्वनयति । चिह्नितपदं गाढालिङ्गनम् । दीर्घं न निःश्वसति । लज्जावशादिति भावः । न जल्पति ऋजु वा वक्रं वा नायकस्य सम्भावनयेति भावः । तेन समानलज्जामदनत्वम् ।

प्रातर्जलेन वदनं परिमार्ज्जयन्ती
बाला विलोचनजलानि तिरोदधाति ॥ ४५ ॥

प्रौढा खण्डिता यथा।

मामुद्वीक्ष्य विपक्षपक्ष्मलदृशः पादाऽम्बुजाऽलक्तकै-
रालिप्ताऽऽननमानतीकृतमुखी चित्रार्पितेवाऽभवत्।

वदति। एवं च समानलज्जामदनत्वं ध्वन्यते। दुःखवत्त्वेपि दीर्घनिःश्वासजल्पनाऽभावाभ्यां दयिते निर्घृणत्वं व्यज्यते। किं तु जलेन वदनम् आननं परिमार्ज्जयन्ती क्षालयन्ती बाला षोडशवार्षिकी नायिका विलोचनजलानि अश्रूणि तिरोदधाति आच्छादयति। विप्रियकारिणं प्रति तज्जनितदुःखप्रदर्शने ऽधिकविप्रियकारितैव स्यादिति चातुर्येण नैतदश्रुजलं किं तु वदनपरिमार्जनजन्यजलमिति गोपनमकरोदिति भावः। अत्र निःश्वासतूष्णींभावाऽश्रुपाताः स्फुटा एव। अत्राऽपह्नुतिरलङ्कारः। वसन्ततिलकावृत्तम् ॥ ४५ ॥

किञ्च जलकरणकवदनमार्जनेन बाष्पाऽम्बु तिरोदधाति। नैतदश्रुजलं किं तु वदनपरिमार्जनजलमिति गोपनं करोतीति भावः। विप्रियकारिणं प्रति तज्जनितदुःखप्रदर्शने ऽधिकविप्रियकारितैव स्यादिति चातुर्येणेति भाव ॥ ४५ ॥

मामिति। उत्तानरनकरणात् विपक्षसुदृशः पादाम्बुजालक्तकैरालिप्ताननं मामुद्वीक्ष्य नम्रीकृतमुखी सा चित्राऽर्पितेवाऽभवत् विप्रियकारिणो दर्शनापेक्षया ऽदर्शनमेव वरमिति बुद्ध्या नम्रमुखत्वम्। विषादमूढतया चित्रसादृश्यम् आलिप्तपदेन गोपनायोग्यत्वं व्यज्यते। नम्रमुखकरणेन किं मदधिकापि सा येनाऽस्य तस्यामासक्तः

रूक्षं नोक्तवती न वा कृतवती निःश्वासकोष्णे दृशौ
प्रातर्मङ्गलमङ्गना करतलादादर्शमादर्शयत् ॥ ४६ ॥

प्रौढां खण्डितामुदाहरति मामुद्वीक्ष्येति । कोपि नायकः सखायं वक्ति । हे सख विपक्षपक्ष्मलदृशः प्रशस्तानि पक्ष्माणि यस्याः सा पक्ष्मला सिध्यादिभ्यश्चेति लच् । तथा दृग्यस्याः सा । विपक्षा सपत्नी चासौ पक्ष्मलदृक् च तस्याः पादाऽम्बुजाऽलक्तकैः चरणकमललाक्षारागैः आलिप्ताननम् । उत्तानरतिकरणादिति भावः । यद्वा पादपतनादिति भावः । मामुद्वीक्ष्य आनतीकृतमुखी नम्रीकृतवदना विप्रियकारिणो दर्शनाददर्शनमेव वरमिति धियेति भावः । चित्राऽर्पितेव आलेख्यनिवेशितेव अभवज्जाता । विषादविमूढतयेति भावः । विपक्षपदं दुःखाऽतिशयजनकत्वं व्यञ्जयति । पक्ष्मलदृक्पदं सौन्दर्याऽतिशयं ध्वनयति । अम्बुजपदं कोमलतां गमयति । आलिप्तपदं गोपनाऽयोग्यतां द्योतयति । आनतीकृतमुखीत्यनेन किं मदधिकापि, सा येनाऽयं तस्यामासक्त इति स्वस्मिन्नपकर्षो ध्वन्यते । यद्वा मामय विहाय तस्यां गुणशून्यायामासक्तो गुणाऽनभिज्ञ एतादृशे चैतस्मिन्ममाऽऽसक्तिर्मूर्खत्वनिबन्धनेति

इति स्वाऽङ्गनिरीक्षणम् । चित्राऽर्पितेत्यनेन निर्गतप्राणतुल्यता ध्वन्यते । रूक्षं कठोरं नोक्तवती । नानोपायैराराधितोपि यद्येतादृशस्तदा कठोरवाक्यादिभर्त्सितः किं वा न करिष्यतीति बुद्ध्येति भावः । अनेनाऽस्फुटाऽऽलापः । दृशौ निःश्वासकोष्णे दुःखजबाष्पेण किं चिदुष्णे न कृतवती । अनेन सन्तापः । उष्णत्वेन रक्तत्वं लक्ष्यते इत्याहुः । आदर्शयत् इति । त्वमीदृश इति किमर्थं वाच्यम् आदर्शे दृष्ट्वा स्वाऽपराधं ज्ञास्यतीति धियेति भावः । प्रातःपदेन तद्दर्शनस्य माङ्गलिकतया आवश्यकत्वं व्यज्यते ॥ ४६ ॥

परकीया खण्डिता यथा ।

कान्तं निरीक्ष्य वलयाऽङ्कितकण्ठदेशं
मुक्तास्तया परभिया परुषा न वाचः ।

लज्जावत्त्वं व्यज्यते । चित्राऽर्पितेत्यनेन दुःखवशान्निर्गतप्राण-तुल्यता द्योत्यते । किं च रूक्षं कठोरं नोक्तवती । नानाविधो-पायैराराधितोऽप्येतादृशमकरोत् किं पुनः कठोरवाक्यादि-भिर्भर्त्सितः न करिष्यतीति धियेति भावः । अथ वा दृशौ लोचने निःश्वासकोष्णे दुःखजबाष्पैः किं चिदुष्णे न कृतवती । पूर्ववद्भावः । किं तु प्रातरुषसि अङ्गना नायिका म-ङ्गलं मङ्गलसूचकम् आदर्शं दर्पणं करतलात्पाणितलात् स्व-स्येत्यर्थः । आदर्शयत् । दर्शयति स्म । त्वमेतादृश इति किमर्थं वक्तव्यं किं तु अयमेवाऽऽदर्शो ऽलक्तकं दृष्ट्वा स्वाऽपराधं ज्ञास्यतीति धियेति भावः । प्रातःपदेनाऽऽदर्शदर्शनस्य माङ्ग-लिकतया ऽवश्यकर्तव्यत्वं द्योत्यते । अत्र निःश्वासकोष्णे इत्य-नेन सन्तापो रूक्षं नोक्तवतीत्यनेन चाऽस्फुटालापो द्योत्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ४६ ॥

परकीयां खण्डितामुदाहरति कान्तमिति । का चित्कां चिदित्याह तया मृगदृशा हरिणनयनया । तयेत्यनेन त्रिशिष्य नाम्नो ऽनिर्देशात्पूर्वपरिचितत्वं द्योत्यते । तदपकीर्तिभीति-चकितत्वं वा । मृगदृशेत्यनेन चञ्चलोचनवत्त्वं तेन च

कान्तं निरीक्ष्य वलयाङ्कितेति । तयेति नामाऽग्रहणमपि पूर्ववत् परभीत्येव । अलिङ्गनविशेषेणैव कङ्कणाङ्कितकण्ठत्वं तेन स्पृहणीयत्वं तेन तत्कृताऽन्यसङ्गस्य दु सहत्वम् । परभीत्या ऽन्यजनभीत्या । तेन प्र-

दूतीमुखे मृगदृशा स्खलदम्बुपूरा
दूरात्परं निदधिरे नयनान्तपाताः ॥ ४७ ॥

कामुकरतिकार्यकारित्वं जनत्रासवत्त्वं वा ध्वन्यते । वलयाऽङ्कितकण्ठदेशं वलयैः कङ्कणैः । परस्या इति भावः । अङ्कितश्चिह्नितः कण्ठदेशो ग्रीवाप्रदेशो यस्य तम् । आलिङ्गनविशेषेणेति भावः । कान्तं कमनीयरूपम् । कान्तपदं दुर्लभत्वं तच्च स्पृहणीयत्वं तच्च तत्कृताऽन्यसङ्गदुःसहत्वं व्यञ्जयति । निरीक्ष्य विलोक्य निरीक्ष्येत्यनेन वलयचिह्नैः यथार्थज्ञानवत्त्वं ध्वन्यते । परभिया अन्यभीत्या प्रच्छन्नकामित्वादिति भावः । परपदं भीतियोग्यतां ध्वनयति । परुषा निष्ठुराः वाचः नोक्ताः किं तु दूतीमुखे सञ्चारिकावदने । दूतीपदं कोपाऽर्हतां गमयति । स्खलदम्बुपूराः स्खलन्परभीत्या किं चित्पतन्नम्बुपूरो ऽश्रुसमूहो येषु ते । पूरपदं बाहुल्यं तच्च दुःखाऽतिशयमभिव्यञ्जयति । दूरात् निदधिरे निक्षिप्ताः । आत्मदोषस्य फलवैचित्र्यमेतत् । तद्विलोकयस्वेति धियेति भावः । यद्वा त्वमेवैनम् अनुशाधीति धियेति भावः । दूरादित्यनेन दूतीमुखाऽवलोकने भीतिस्तत्र किमु वाच्यं कान्तं प्रतीति प्रच्छन्नकामुकाऽभिलाषवत्त्वं व्यज्यते । अत्र स्खलदम्बुपूरा इत्यनेनाऽश्रुपातः स्पष्ट एव । नयनान्तपाता इत्यनेन किमतः परं विधेयमिति चिन्ता व्यज्यते । वसन्ततिलकावृत्तम् ॥ ४७ ॥

च्छन्नकामिनीत्वं व्यज्यते । परुषा निष्ठुराः । दूतीमुखइति । अस्यार्थस्य आत्मदूत्यस्य फलवैचित्र्यमेतद्विलोकयस्वेति भावः । त्वमेवैनमनुशाधीति वा । दूरादित्यनेन दूतीमुखाऽवलोकनेपि भीतिः तत्र किं वाच्य कान्तं प्रतीति प्रच्छन्नकामुकाऽभिलाषो व्यज्यते ॥४७॥

सामान्यवनिता खण्डिता यथा ।

उरस्तव पयोधराऽङ्कितमिदं कुतो मे क्षमा
ततो मयि निधीयतां वसु पुरा यदङ्गीकृतम् ।
इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया
क्वणत्कनककङ्कणं करतलात्समाकृष्यते ॥ ४८ ॥

सामान्यवनितां खण्डितामुदाहरति उरस्तवेति । काचित्कां चिद्वक्ति हे शठ तवेदम् उरो वक्षः पयोधराऽङ्कितम् अन्यसामान्यन्यवनितास्तनचिह्नितम् । तवेत्यनेनाऽनादरात् सन्तापो द्योत्यते । पयोधरपदं गुरुतामावेदयति । इदमिति गोपनाऽनर्हतां द्योतयति । स्तनगुरुतया चिह्नजननसामर्थ्यम् । तावता किमित्यत आह मे कुतः कस्माद्धेतोः क्षमा तितिक्षा । तवैतादृशाऽपराधसहने इति भावः । फलितं वक्ति । अतः पूर्वहेतोः मयि मद्विषये पुरा पूर्वं यत् वसु द्रव्यम् अङ्गीकृत प्रतिश्रुतं तन्निधीयतां प्रदीयताम् इत्युक्त्वा वारस्त्रिया गणिकया वारस्त्री गणिका वेश्येत्यमरः । वसुपदं त्यागाऽनर्हत्वं द्यो-

उरस्तवेति । तवेत्यनादरः । इदमिति गोपनाऽनर्हता । कुतो मे क्षमा त्वदीयैतादृशाऽपराधसहनम् इति भाव. । अङ्गीकृतत्वेनाऽवश्यदेयता । वसुपदेन त्यागाऽनर्हता । प्रचलचेतसश्चञ्चलचेतसः । अत्रागमनप्रतिज्ञां कृत्वा ऽन्यत्र गमनेन चञ्चलता तेन चाऽग्रे दर्शनाऽभावसम्भावनया सद्यो द्रव्यग्रहणयोग्यता ध्वन्यते । क्वणद्ग्रहणसमये स्वकङ्कणशब्दो यथा भवति तथा नायककरतलात् कङ्कणमाकृष्यतइत्यर्थः ॥ ४८ ॥

पतिमवमत्य पश्चात्परितप्ता कलहान्तरिता। अस्याश्चेष्टा। भ्रान्तिसन्तापसंमोहनिःश्वासज्वरप्रलापादयः।

मुग्धा कलहान्तरिता यथा।

अनुनयति पतिं न लज्जमाना
कथयति नापि सखीजनाय किंचित्।

तपति। अङ्गीकृतमित्यनेनाऽवश्यदेयत्वं द्योत्यते। इति हेतोः प्रचलचेतसश्चञ्चलचेतसः। अत्राऽऽगमनप्रतिज्ञां कृत्वा अन्यत्र गतत्वादिति भावः। चञ्चलपदमग्रे दर्शनाऽभावं द्योतयति। तच्च सद्यो द्रव्यग्रहणयोग्यत्वम्। प्रियतमस्य कान्तस्य तमवविवक्षितः। यद्वा द्रव्यवत्त्वेन प्रियत्वात् तत्सार्थक्यम्। करतलाद्भ्रष्टात्। क्वणत्कनककङ्कणं क्वणत्स्वनत्कनककङ्कण सुवर्णवलयं करतलमिति युक्तः पाठः। क्वणत्कनककङ्कणमिति क्रियाविशेषणम्। एवं च पुरुषकङ्कणस्यैकत्वौचित्यात् क्वणनमसम्भवीति दूषणमसंलग्नकं वेदितव्यम्। स्वनत्सुवर्णवलयं सगाकृष्यते हठादाकृष्यते। पृथिवी वृत्तम्॥ ४८॥

प्राप्ताऽवसरत्वात्कलहान्तरितां लक्षयति। पतिमवमत्येति। स्वकृतपत्यवमानेनोत्तरपरितापवत्त्वमित्यर्थः। उक्तं च। 'कलहान्तरिताऽमर्षात् विधूताऽनुशयाऽऽर्तियु'गिति। लक्षणज्ञानाय तत्क्रियामाह। अस्या इति। भ्रान्तिर्मिथ्यामतिः। सन्तापोऽनुतापः। समोह इन्द्रियवैकल्यम्। इतरत्स्पष्टम्।

पतिमवमत्येति। स्वकृतपत्यवमानोत्तरपरितापवत्त्वमित्यर्थः। भ्रान्तिर्मिथ्यामतिः। सन्तापोऽनुतापः। संमोह इन्द्रियवैकल्यम्।

अनुनयतीति। लज्जमाना नवोढा पतिं कलहेनाऽवमानितं नाऽनुनयति न सान्त्वयति। सखीजनाय नापि कथयति। अत्रापि लज्ज-

प्रसरति मलयाऽनिले नवोढा
वहति परं तु चिराय शून्यमन्तः ॥ ४९ ॥

मध्या कलहान्तरिता यथा ।

विरमति कथनं विना न खेदः
सति कथने समुपैति काऽपि लज्जा ।

मुग्धां कलहान्तरितामुदाहरति अनुनयतीति । का चि-त्कां चित्प्रत्याह । नवोढा मुग्धा लज्जमाना सव्रीडा । इदं चाऽग्रेऽप्यन्वेति । पतिं भर्तारं कलहेनाऽवमानितमिति भावः । न अनुनयति सान्त्वयति । किं च सखीजनाय सखीसमूहायापि । जनपदेन समूहमध्ये एकामपि स्वकीयवृत्तं नाऽकथयत् इति लज्जातिशयं द्योतयते । किंचिदपि किं विधेयमित्यादि न कथयति । किं तु मलयाऽनिले मलयसम्बन्धिसमीरे विरहिदाहके इति भावः । मलयपदं सौगन्ध्यमावेदयति । अनिलपदमनिवारणीयतां द्योतयति । प्रसरति वाति सति चिराय बहुकालं शून्यं प्रतिपत्तिरहितं, शून्यम् इत्यनेन संमोहो द्योत्यते । अन्तः अन्तःकरणम् । भीमसेन इतिवत् नामैकदेशे नामप्रयोगः । वहति धारयति । विरहविषण्णतयेति भावः । पुष्पिताग्रा वृत्तम् ॥ ४९ ॥

मानेत्यन्वेति । सखीसमूहमध्ये नैकामपि वृत्तमकथयदिति लज्जाऽतिशयो ध्वन्यते । मलयसम्बन्धेन सौगन्ध्यम अनिलपदेनाऽनिवारणीयता । शून्यं प्रतिपत्तिरहितम । अन्त. अन्त.करणम ॥ ४९ ॥

विरमतीति । निवेद्य दु:ख सुखी भवतीति व्यापारात् । एवं चाऽवश्यकथनीयता द्योत्यते । कापि निवारयितुमशक्या । अधा-

इति कलहमधोमुखी सखीभ्यो
लपितुमनालपितुं समाचकाङ्क्ष ॥ ५० ॥

प्रौढा कलहान्तरिता यथा।

अकरोः किमु नेत्र शोणिमानं
किमकार्षीः कर पद्मतर्जनं वा।

मध्यां कलहान्तरितामुदाहरति विरमतीति। कथनं विना ज्ञापनं विना। पृथगिनेति द्विनीया। खेदो दुःख न विरमति न गच्छति निवेद्य दुःख सुखी भवति। एवं चाऽवश्यकथनीयत्वं द्योत्यते। किञ्च कथने सति खेदे निवेद्यमाने सति कापि दुर्निवारा लज्जा वपा। अधाष्टर्येनेति भावः। समुपैति। इति हेतोः अधोमुखी नम्रवदना। लज्जावशादिति भावः। सखीभ्यः लपितुं वक्तुम् अनालपितुमवक्तुं समाचकाङ्क्ष। अत्र मध्यात्वं स्फुटमेव। सशयो ऽत्रालङ्कारः। इदमपि पुष्पिताग्रावृत्तम्॥५०॥

प्रौढा कलहान्तरितामुदाहरति अकरोरिति। कापि नायिका परितापवशान्नेत्रादीन्प्रसाह हे नेत्र नयति विलोकनविषयेण्याऽखिलमुखजातं येन तत्सम्बोधनम्। शोणिमानं रक्तिमानं किमित्यकरोः। कुपितप्रसादसम्पादनानिपुणस्यापि तवैतादृशाऽऽरुण्यप्रदर्शनेन कोपोत्पादनमनुचित-

धाष्टर्येनेति भावः। इति हेतोः लज्जावशात् अधोमुखी। अत्र मध्यात्वं स्फुटमेव ॥ ५० ॥

कापि परितापवशान्नेत्रादीनाह हे नेत्र किमिति शोणिमानमकरोः। कुपितप्रसादनानैपुण्येऽपि आरुण्यप्रदर्शनेन कोपोत्पादनमनुचितमिति व्यङ्ग्यम्। कर पद्मतर्जनं वेति पाठः। हे कर पद्मकरणकत-

कलहं किमधाः क्रुधा रसज्ञे
हितमर्थं न विदन्ति दैवदष्टाः ॥ ५१ ॥

मिति व्यज्यते । किं च हे करपल्लव करकमल तर्जनं वा किमित्यकार्षीः कमलपदं कोमलतां तापोपशमनशीलतां च व्यञ्जयति । सा च तादृशतर्ज्जनकारणाऽनौचित्यम् । किं च रसज्ञे रसाऽभिज्ञे रसने क्रुधा कोपेन कलहं किमधाः कृतवती । नायकविषयत्व सर्वत्र । रसाऽभिज्ञत्वान्नेत्रकरयोरारुण्यादिकरणेऽपि नाऽतीवापराधो रसाऽभिज्ञत्वात्तवैतादृशकरणे ऽत्यन्तमपराध इति भावः । एवं च नयनाऽऽरुण्यादेरन्यथापि समर्थनीयत्वेन नायकस्य न तथा दुःख यथा त्वत्कृतविग्रहस्येति व्यज्यते । युक्तमिदं दैवहतानामित्याह हितमिति । दैवदष्टाः प्रतिकूलदैवाः । हितमनुकूलार्थं न विदन्ति न जानन्ति । क्रोधाऽऽन्ध्यादिति भावः । एवं च भवद्भिरेव सविलासकटाक्षविक्षेपवमनाञ्चलाऽपकर्षणद्राक्षासदृशाक्षरपरिहासवचनरचनाभिर्यच्चित्तं स्वायत्तं कृतम् अमूर्तैर्भवद्भिः इदानीं तं मयैवैतादृशाऽनुचितमाचरितमिति न सम्भवति किं तु दुर्दैवकृतमिति न भवतामपराध इति ध्वन्यते । अत्राऽनुतापः स्पष्ट एव ।

र्जनम् अर्थान्नायकस्य किमित्यकार्षीः । हे रसज्ञे जिह्वे क्रुधा कलहं किमधाः कृतवती । रसाऽनभिज्ञनेत्रकराभ्यां तथा करणेऽपि रसज्ञायास्तव सर्वथेदमनुचितमिति भावः । किञ्चाऽऽरुण्यादेस्तथानयेसम्भवे ऽपि त्वत्कृतस्य नयनेऽपि न कोऽपि समाधानोपाय । तत्राऽर्थान्तरन्यासमाह हितमिति । यत्तु कापि सखी नायिकां वदति हे ऽरसज्ञे किमिति नेत्रयो शोणिमानमकार्षीरित्यादिक्रमेणेत्याचक्षते तन्न । नायिकाया परितापाऽदर्शनेन लक्षणाऽसङ्गतेः ॥ ५१ ॥

परकीया कलहान्तरिता यथा।

भर्तुर्यस्य कृते गुरुर्लघुरभूद्गोष्ठी कनिष्ठीकृता
धैर्य्यं कोशधनं गतं सहचरी नीतिः कृता दूरतः।

यत्तु कापि सखी नायिकां वक्ति हे अरसज्ञे क्रीडारसाऽनभिज्ञे। कथमन्यथा कलहमकरोरिति भावः। नेत्रशोणिमानं नयनाऽऽरुण्यं कोपेन किमु अकरोः। कृतवती किं च करपद्मतर्जनं वा हस्तकमलनिर्भर्त्सनं किमिति अकार्षीः कृतवती। वाग्भर्त्सनस्य यथा कथं चित्सोढुं शक्यत्वेपि करकृततर्जनस्याऽत्यन्ताऽसह्यत्वेन तत्कारित्वेनाऽत्यन्ताऽनौचित्यं व्यज्यते। किं च कलहमत्यन्ताऽनुचितवाङ्मिश्रणमित्यहो ते मौर्ख्यमिति भावः। अत एवा ऽरसज्ञे इत्यामन्त्रणमुचितम्। नाऽयं तत्राऽपराधो दैवमेव ते प्रतिकूलमित्याह दैवदुष्टा हितमनुकूलार्थं क्रुधा। रुट्क्रोधौ स्त्रियामित्यमरः। न विदन्ति न जानन्ति। दैवहतानामेवैतादृशः कोप इति भावः। इति व्याख्यानं तन्नायिकायाः। परितापाऽदर्शनेन लक्षणाऽसङ्गत्या व्याप्तमेव। मालभरणीयोद्वृत्तम् ॥ ५१ ॥

भर्तुर्यस्येति। मातरित्यनेन स्वाऽनुचिताऽऽचरणप्रकाशवक्ता व्यज्यते। यस्य सौन्दर्यादिभरणकर्तुः कृते गुरुः श्वश्र्वादिर्लघुरगण्यो ऽभोन्मम। गुरुपदेनाऽनुल्लङ्घनीयाज्ञत्वं तादृशस्याप्यनादरेण तस्मिन्प्रेमाऽतिशयो व्यज्यते। यद्वा यस्य कृते भर्तुः गुरुः श्वशुरो लघुरभूत् तेन तदनादरकरणेन भर्तुरप्यधमानः कृत एवेति भावः। यद्वा यदर्थे दूत्यादिरपि गुरुः कृतः श्वश्र्वादिवदुपासितः सोऽप्यवधीरित इति अत्यनुचिताचरणं ममेति व्यज्यते। गोष्ठी सतीसभा कनिष्ठीकृतेत्यलक्षीकृता। एवं च सतीसमाजनिन्दापि न गणितेति

निर्मुक्ता तृणवत्त्रपा परिचिता स्रोतस्विनी बिन्दुवत्
स क्रोधादवधीरितो हतधिया मातर्बलीयान्विधिः॥५२॥

परकीयां कलहान्तरितामुदाहरति भर्तुरिति । का चिन्ना-यिका सखीं प्रत्याह हे मातः मातरित्यनेन स्वाऽनुचिताऽऽच-रणप्रकाशनाऽर्हत्वं व्यज्यते । यस्य भर्तुः कृते बिभर्ति सौन्द-र्यवीति भर्त्ता । एवं च मनोहरत्वमभिव्यज्यते यदर्थमित्यर्थः । गुरुः श्वशुरादिः लघुरगण्यः अभूत् । अर्थान्ममेति शेषः । गु-रुपदमनुल्लङ्घनीयाज्ञत्वं व्यञ्जयति । यद्वा यदर्थमित्यप्रे-ष्यन्वेति । भर्तुः गुरुः लघुरभूत् मान्यस्य पतिमान्यस्यापि मान्यत्वेपि तदनादरकरणेन भर्तुरप्यनादरः कृत इति भावः । यद्वा यदर्थं लघुर्दूत्यादिर्जनः गुरुरत्यन्तसेवनीयः अभूत् । एवं च यदर्थो दूत्यादिनीचजनो ऽपि श्वश्र्वादितुल्यतयोपासितः सो ऽप्यवधीरित इति महदनुचिताऽऽचरणं ममेति व्यज्यते । किं च गोष्ठी सतीसभा कनिष्ठीकृता निन्दिता । यत्र सती-

भाव । यद्वा यत्र सतीसमायामभ्यर्हितयमनुचिनाऽऽचारवती तत्राऽन्यासां का गणनेति तासां मया निन्दा सम्पादितेति भावः । कोशो ऽर्थगृहं तन्निष्ठद्रव्यरूपम् । धैर्यं गाम्भीर्यम् । यद्वा धीरमी-रयति सा धीरा तद्भावो विवेकित्वं गतं नष्टम् । कोशपदेनापि यदु-पयोगित्वं तेन तन्नाशस्याऽनिदु सहत्वं ध्वन्यते । सहचरी । तत्त्यागाऽनर्हता । सा नीतिरपि दूरत कृता । त्रपा तृणवन्निर्मुक्ता । त्रपावत्त्वेनावश्याऽङ्गीकरणीयता । तृणपदेनाऽगण्यनीयता । किञ्च स्रो-तस्विनी प्रशस्तस्रोतोयुक्ता अगाधजलापि नदी बिन्दुवत्परिचिता । स्रोतस्वत्तया ऽनुलङ्घनीयत्वम् । सापि यदर्थं एवं साहसं कृतं सोपीत्यर्थः । हतधिया नष्टधिया ॥ ५२ ॥

सामान्यवनिता कलहान्तरिता यथा ।

यत्पङ्केरुहलक्ष्म पाणिकमलं भाग्यालये यद् गुरु-
र्न्यस्तं वा मम यल्ललाटफलके भाग्याक्षरं वेधसा ।

सभायामभ्यर्हिततमेयमीदृगनुचिताऽऽचारवती तत्र ता अ-प्यनुचिताऽऽचारवत्य इति तासामपि मया निन्दा संपादि-तेत्यनुचितमिति व्यज्यते । कोशधनम् अर्थ संग्रहगृहं त-न्निष्ठद्रव्यरूप धैर्यं गाम्भीर्यं गतं नष्टम् । कोशपदेन विपदुप-योगित्वं ध्वन्यते । तेन तन्नाशस्याऽतिदुःसहत्वं व्यज्यते । सहचरी नियतनिकटसञ्चारिणी नीतिः दूरतः कृता तिर-स्कृता इत्यर्थः । सहचरीपदं त्यागाऽनर्हतां गमयति । नीति-पदमवश्याऽङ्गीकरणीयत्वं व्यञ्जयति । तृणपदमगणनीयत्वं ध्वनयति । निर्मुक्ता त्यक्ता । एवं च त्यागे बुद्धिपूर्वकत्वं ध्व-न्यते । किं च स्रोतस्विनी स्रोतः प्रवाहो ऽस्या अस्तीति स्रोतस्विनी अगाधजलापि नदी सङ्केतमार्गवर्तिनीत्यर्थः । बि-न्दुपद शीघ्रोल्लङ्घनीयत्वं गमयति । सः यदर्थमेवं साहसं कृत मो ऽपीत्यर्थः । क्रोधात् कोपात् हतधिया नष्टबुद्ध्या मया अवगीरितः धिक्कृतः । ननु यदर्थमेतावत्साहसं कृत तं प्रति म-या कोपः कृत इति न सम्भवति तस्मात्सर्वमेतद्दैवकृतमित्याह । विधिर्दैवं बलीयान् एतादृशाऽनुचितकार्यकरणे ऽपि समर्थः ।

यत्पङ्के इति । यद्भाग्यसूचकपद्मचिह्नवत्पाणिकमलं यद्भाग्यभ-वने मे गुरुः बृहस्पतिः भाग्यसूचकः । एतत्सर्वं यः अर्थसत्त्वादि कृतवान् तादृशे ऽत्यन्ताऽनुचितोऽपि कोपो यतः कृतः अतो मां धि-क् । एवं कोपे कृते पुनर्जीवनमनुचितमित्याह जीवनमपि धिक् ।

तत्सर्वं सखि यो यथार्थमकरोत्तस्मिन् प्रकोपः कृतो
धिङ् मां धिङ् मम जीवितं धिगतनुं धिक् चेष्टितं धिग्वयः ५३

तथा च नाऽपराधो मदीय इति भावः। अत्राऽनुतापस्तु स्फुट एव। नर्मस्फोटाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

वेश्यां कलहान्तरितामुदाहरति। यत्पङ्केरुहेति। काचिन्नायिका सखीं प्रत्याह हे सखि पाणिकमलं करकमलं यत्पङ्केरुहलक्ष्म पङ्केरुहं कमलम् भाग्यसूचकमित्यर्थः। तल्लक्ष्म चिन्हं यस्य। चिन्हं लक्ष्म च लक्षणमित्यमरः। किं च मम, इदं च तर्वत्राऽऽन्वेति। भाग्याऽलये भाग्यभवने नवमे इत्यर्थः गुरुर्बृहस्पतिः। भाग्यसूचक इत्यर्थः। गीष्पतिर्धिषणो गुरुरित्यमरः। किं च ललाटफलके ललाटपट्टे वेधसा ब्रह्मणा भाग्याऽक्षरं भाग्यसूचकवर्णकदम्बकं न्यस्तं निक्षिप्तम्। एवं च ब्रह्मणा लिखितमेतावदेव परं तु तल्लिखनस्य याथार्थ्यमनेनैव कृतमिति वेधसोऽप्यधिकत्वमावेद्यते। तत्सर्वं पङ्केरुहलक्ष्मादि यथार्थम् बहुतरधनदानेनेति भावः। अकरोत् कृतवान्। अकरोदित्यनेन सकलभाग्यसंपादकतया

अथ जीवने ऽपीदृशौदार्याऽभाववति नायकान्तरे रतिरत्यन्ताऽनुचितेत्याह अतः कामं धिक् रतिजनकत्वादिति भावः। यद्वा स्वत एवं तादृशदानशीले मम वित्तमात्रोपाधिक एवाऽनुरागस्तेनोत्पादितः न स्वाभाविक इत्यतस्तं धिक् इति भावः। तनुशून्यत्वमेवेदृशज्ञानहेतुरिति भावः। तादृशानुरागे तिरस्कारिचेष्टादिकमयुक्तमित्याह धिक् चेष्टितमिति। चेष्टाकरणे तु वयोऽपि धिक्। एवंविधतारुण्यभोक्ता तदतिरिक्तो न कोपीति भावः ॥ ५३ ॥

सङ्केतनिकेतने प्रियमनवलोक्य समाकुलहृदया विप्रलब्धा। अस्याश्चेष्टा। निर्वेदनिःश्वाससन्तापाऽऽलापभयसखीजनोपालम्भचिन्ताऽश्रुपातमूर्च्छादयः।

ऽनुभूतत्वात् तस्मिन्नपि प्रकोपकरणस्याऽत्यन्तमनौचित्यमभिव्यज्यते। इति मां धिक् गर्हिता ऽहं तादृशेऽपि एतादृशाऽनुचिताचरणविधानादिति भावः। एवं च प्रकोपे कृते ऽधुना जीवितमिदमत्यन्ताऽनुचितमित्याह मम जीवितमपि धिक्। अथ जीवने ऽप्येतादृशौदार्याऽभाववति नायकान्तरे रतिरत्यन्ताऽनुचितेत्याह अतनुं कामं धिक्। रतिजनकत्वादिति भावः। यद्वा एतादृशाऽनुचितकारित्वेऽपि तथाविधमहाखविशेषैः नाऽयं प्राणवियोगं करोतीत्यत एतमपि धिगस्त्वित्याह धिगतनुमिति। यद्वा स्वत एवैतादृशदानशीलेऽपि मम वित्तमात्रोपाधिक एवानुराग उत्पादितो ऽनेन मदनेन तु स्वाभाविक इत्यत आह धिगतनुमिति। तनुशून्यत्वादेवैतादृशज्ञानविकल इति भावः। ये तु धिगपरमिति पाठं प्रकल्प्याऽपरं सौन्दर्यादीत्यर्थ इति व्याचख्युस्ते अपरपदस्य सौन्दर्याद्यर्थे प्रमाणाऽभावाच्चेष्टितादीनामपि संगृहीतत्वादग्रे तदभिधानपौनरुक्त्याच्च व्याख्याऽनभिज्ञा एव। मदनेन वित्तमात्रोपाधिकाऽनुरागजनने ऽपि कान्ततिरस्कारकचेष्टादिकमनुचितमित्याह धिक् चेष्टितमिति। एतादृशपतितिरस्कारकारकचे-

सङ्केतस्थले पत्यनवस्थानज्ञानविमनायमानत्वं लक्षणम्। निर्वेदः स्वाऽवमाननम्। उपालम्भः सनिन्दपरिभाषणम्। चिन्ता ऽनागमनहेतुविषया।

मुग्धा विप्रलब्धा यथा ।

आलीभिः शपथैरनेककपटैः कुञ्जोदरं नीतया
शून्यं तच्च निरीक्ष्य विक्षुभितया न प्रस्थितं न स्थितम् ।

ष्टाकरणे ऽपि यद्वयस्तारुण्यादि तदपि धिगस्तु । एवं चैतादृ-शतारुण्यभोक्ता न कोपयितव्य इति भावः । अनुतापश्चा-ऽत्रापि स्फुट एव । शार्दूलविक्रीडितं वृत्तम् ॥ ९३ ॥

प्राप्ता ऽवसरत्वाद्विप्रलब्धां लक्षयति । सङ्केतनिकतने इति । सङ्केतस्थले पत्यनवस्थानज्ञानविमनायमानत्वमित्यर्थः । लक्ष-णज्ञानाय चेष्टामाह अस्याश्चेष्टेति । निर्वेदः स्वाऽवमाननम् । सखीजनोपालम्भः सनिन्दपरिभाषणम् । चिन्ता ऽनागमनहे-तुज्ञाने चित्तैकाग्रता । मूर्छेन्द्रियवैकल्यम् ।

तत्र मुग्धां विप्रलब्धामुदाहरति आलीभिरिति । का चित्काञ्चित्प्रत्याह आलीभिः सखीभिः । आलिः सखी व-यस्या चेत्यमरः । एवं च विश्वसनीयत्वं व्यज्यते । बहुवचन-मप्रतिषेध्यत्वं ध्वनयति । अनेककपटैरनेकव्याजैः । कपटो ऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमरः । शपथैः समयैः समयाः शपथाचारेत्यमरः । कुञ्जोदरं शून्यं लतागृहमध्यं स-ङ्केतीकृतमित्यर्थः । एवं च निकुञ्जगमनस्योचितत्वं ध्वन्यते ।

आलीभिरिति । आलीभि तेन विश्वासवत्त्वं बहुवचनेनाऽप्रतिषे-ध्यत्वम् । अनेककपटैर्व्याजैः शपथैस्समयै कुञ्जोदरं लतागृहमध्यं स-ङ्केतितमित्यर्थ. । नीतया प्रापितया । तेन मुग्धात्वम् । शून्यं प्रियर-हितम् । विक्षुभितया विमनस्कया । प्रियविरहचिन्ताभ्यामिति भाव । प्रियाऽऽगमनसम्भावनया चलितम् प्रियतमराहित्येन दुःख-

न्यस्ताः किं तु नवोढनीरजदृशा कुञ्जोपकण्ठे रुषा
ताम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशो दृष्टयः ॥५४॥

नीतया प्रापितया। एवं च मुग्धात्वमभिव्यज्यते। तच्च लतागृहं शून्यम् प्रियरहितम्। शून्यपदमनवलोकनीयतां गमयति। निरीक्ष्य विलोक्य विक्षुभितका विमनस्कया। प्रियविरहचिन्ताभयामिति भावः। न प्रस्थितं चलितम्। प्रियसमागमनसम्भावनयेति भावः। न स्थितम् प्रियतमस्य प्राप्त्यभावादिति भावः। यदि गतं तदा कदा चिदागामि प्रियतमदर्शनमसम्भावि, स्थितं यदि तदा तद्रहितो निकुञ्जो दुःखं दास्यतीति किं कर्तव्यमिति विचार्य व्याकुलता व्यज्यते। किं तर्हि कृतं नवोढनीरजदृशा नवोढाऽङ्गनया। नीरजपदमश्रुपातं व्यञ्जयति। कुञ्जोपकण्ठे निकुञ्जप्रान्ते रुषा कोपेन। ताम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशः ताम्यन्तो व्या-

दत्त्वाऽत्र स्थितम्। नेन व्याकुलविचारता व्यज्यते। किं तु नवोढया नीरजदृशा नीरजपदमश्रुपातं व्यञ्जयति। कुञ्जोपकण्ठे निकुञ्जप्रान्ते कोपेन स्वाभिलषिताऽप्राप्त्या ताम्यन्तः व्याकुला ये भ्रमरास्तेषां कदम्ब समूहस्तस्य डम्बरमारभटीति यावत्। तस्य चमत्कारो विलासविशेषस्तत्तुल्या दृशो न्यस्ताः परितः क्षिप्ताः। अत्र व्याकुलत्वेन दुःखितत्वम् भृङ्गत्वेन श्यामत्वम् कदम्बत्वेन निबिडता आडम्बरत्वेन कटाक्षेषु प्रौढता। चमत्कारपदेन चित्ताकर्षकता। ईदृशकपटकारिण्यः सख्यो न द्रष्टव्या इति निकुञ्जप्रान्तमेवाऽवलोकयतीति भावः। यद्वा सखीवचनेन पलायनार्थं मार्गान्तराऽवलोकनाय तथाऽपश्यदिति भावः॥ ५४ ॥

मध्या विप्रलब्धा यथा।

सङ्केतकेलिगृहमेत्य निरीक्ष्य शून्य-

मेणीदृशो निभृतनिःश्वसिताऽधरायाः।

कुलाः स्वाऽभिलषिताऽप्राप्त्येति भावः। ये भृङ्गाः भ्रमराः तेषां कदम्ब वृन्दम्। निकुरम्ब कदम्बकमित्यमरः। तेषां डम्बरम् आरभटीति यावत्। तस्य चमत्कारा विलासविशेषाः तान्स्पृशन्स्सङ्गीकुर्वन्ति तत्तुल्या इत्यर्थः। दृष्टयो दृक्पाताः न्यस्ताः परितः क्षिप्ताः। कथमेताभिः सखीभिरपि प्रतार्या-त्राऽहमानीता प्रियतमस्तु नाऽद्याप्यायातीति कोपवशात्प्रिय-तमाऽऽगमनमार्गभूतनिकुञ्जप्रान्तभूमावेव दृक् प्रेरितेति भावः। यद्वा एतादृशकपटकारिण्यः सख्यो न द्रष्टव्या इति धिया कु-ञ्जप्रान्तमवलोकयामासेति भावः। यद्वा प्रियतमशून्यनिकु-ञ्जे ऽवस्थितौ कामपीडा स्याद्यदि येन पथा ऽऽगतं तेनैव गन्तव्यं तदेताभिः प्रतिबन्धः कर्तव्य एवेत्यतो मार्गान्तरवि-लोकनार्थं कुञ्जान्तरे दृष्टिमकरोदिति भावः। यद्वा एताभिरेव प्रियतमो ऽत्रैव निकुञ्जान्तरे स्थापितो भविष्यतीति धिया तद्विलोकनार्थं तत्र दृष्टिमधादिति भावः। ताम्यत्पदं दुःखव-त्त्व ध्वनयति। भृङ्गपद श्यामतामभिव्यञ्जयति। कदम्बपदं विकटकटाक्षवत्तां गमयति। डम्बरपदं कटाक्षेषु प्रौढताम-भिव्यञ्जयति। चमत्कारपद चित्ताऽऽकर्षकतामभिव्यञ्जयति। अत्र निदर्शनाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ९४॥

सङ्केतकेलीति। एत्य प्रियसङ्गमेच्छयेति भाव। निभृतं मन्दं मन्द लज्जयेति भाव। अर्द्धाक्षरमसम्पूर्णाक्षरम् अर्थात्सखीं प्रति।

अर्धाक्षरं वचनमर्धविकाशि नेत्रं
ताम्बूलमर्धकवलीकृतमेव तस्थौ ॥ ५५ ॥

मध्यां विप्रलब्धामुदाहरति सङ्केतकेलीति । का चिन्नायिका कां चित्सत्याह सङ्केतकेलिगृहं सङ्केतीकृतकेलिसदनम् । एकवचनेनाऽतिस्पृहणीयत्वं ध्वन्यते । एत्याऽऽगत्य प्रियतमसङ्गमेच्छयेति भावः । तच्च शून्यं प्रियरहितं निरीक्ष्य । शून्यपदमवलोकनीयतां द्योतयति । निभृतनिःश्वसिताऽधरायाः निभृतमुपपन्नं निःश्वसितं यस्मिन् तथोक्तो ऽधरो यस्यास्तस्याः । निःश्वसितं चाऽत्र स्फुटमेव । एणीदृशो मृगलोचनायाः प्रियाऽऽप्तिकारणतयेति भावः । एणीपदं विशालत्वं चलत्वं च द्योतयति । अर्द्धाक्षरम् अर्द्धान्यसंपूर्णान्यक्षराणि वर्णानि यत्र तथा वचनं वाक्यम् । तस्थौ स्थितम् । इदं चाऽग्रेऽप्यन्वेति । अर्थात्सखीं प्रति । एवं च यथा कथं चिद्वक्तुमुपक्रान्तमेकमपि वाक्यं न सम्पूर्णाऽक्षरं वक्तु शक्यमिति तात्कालिकी मदनबाधा ऽभिव्यज्यते । यद्वा लज्जामदनसाम्यमभिव्यज्यते । न केवलं वचनमेव तथा जातमपि तु विलोकनमपि तथेत्याह किं च अर्द्धविकाशि अर्द्धो विकाशो यत्र तदर्द्धविकाशि नेत्रं नयनम् । व्यङ्ग्यं पूर्ववदेव । शून्या चेयं दृष्टिः । उक्तं च ।

तेन तात्कालिकाऽधिकमदनबाधा व्यज्यते । यद्वा लज्जामदनसाम्यम् । अर्द्धविकाशि नेत्रम् । शून्या चैषा दृष्टिः । ताम्बूलमर्द्धचर्वितमेव । यदर्थन्ताम्बूलचर्वणादिरङ्गनायाः स एवात्र नास्तीति धिया तथैव स्थितेति भावः । एवं च प्रियविरहाज्जडतामापन्नेति ध्वन्यते ॥ ५५ ॥

प्रौढा विप्रलब्धा यथा।

शून्यं कुञ्जगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभवं
दूती नापि निवेदिता सहचरी पृष्टापि नो वा तया।

निष्कम्पा समतारा या मलिना शून्यदर्शना।
तथा समपुटा बाह्यविषयेषु गतस्पृहा।
सा दृष्टिः कथिता शून्या धीरैश्चिन्तानिरूपणैः। इति।

किं च ताम्बूलम् अर्द्धकवलीकृतमेव अर्द्धचर्वितमेव। यत्र गृहीतमपि ताम्बूलं न चर्वितं तत्राऽन्यकार्यकरणवार्ता केति भावः। यद्वा यदर्थमेतत्ताम्बूलचर्वणादिशृङ्गाररचना स एवाऽत्र नास्तीति व्यर्था सेति अतस्तथैव स्थितेत्यर्थः। एवं च प्रियविरहवशाज्जडतामापन्नेति ध्वन्यते। अत्र प्रस्तुतनायिकाऽवस्थाशंसने अप्रस्तुतस्य वचनाद्यर्थाऽक्षरत्वादेः प्रशंसनादप्रस्तुतप्रशंसाऽलङ्कारः। स च प्रियशून्यस्य हेतोरितरवाक्यार्थं प्रति हेतुत्वात्काव्यलिङ्गाऽनुप्राणितः। वसन्ततिलकावृत्तम् ॥५५॥

प्रौढां विप्रलब्धामुदाहरति शून्यमिति। काचित्कांचित्प्रत्याह कुञ्जगृहं लतागृहं सङ्केतीकृतम्। एकवचनेनाऽतिस्पृहणीयत्वं व्यज्यते। शून्यं प्रियरहितम्। शून्यपदमनवलोकनीयतां द्योतयति। निरीक्ष्य अत एव तद्विरहेण चेतोभवं मदनम्। चेतोभवपदमनिवारणीयतां ध्वनयति। कुटिलं क्रूरम् पीडाजन-

शून्यमिति। शून्यत्वेनाऽवलोकनीयता व्यज्यते। चेतोभुवं तेनाऽनिवारणीयता। कुटिलं पीडाजनकं तेन दु सहत्वम्। दूती न निवेदिता प्रियाऽऽनयनार्थं न ज्ञापिता। पृष्टा प्रियवृत्तान्तमिति शेषः। किमतः परं विधेयमिति वा। किं तु दूतीनिवेदनसखीप्रश्नकालमध्ये क्रूरकामशरघातैर्मरणमेव स्यादिति तदनादृत्य मदनविरोधिमहेश्व-

शम्भो शङ्कर चन्द्रशेखर हर श्रीकण्ठ शूलिन् शिव
त्रायस्वेति परं तु पङ्कजदृशा भर्गस्य चक्रे स्तुतिः॥५६॥

कमित्यर्थः। कुटिलपदं दुःसहत्वं व्यञ्जयति। विज्ञाय ज्ञात्वा दूत्यपि परिमञ्चारिकापि न निवेदिता नाऽऽलापिता प्रियाऽऽनयनार्थमिति भावः। दूतीपदं प्रियसङ्गमसंपादनयोग्यतां व्यञ्जयति। किं च सहचर्यपि तरुण्यपि नो पृष्टा प्रियवृत्तान्तं प्रति। किमतः परं विधेयमिति भावः। सहचरीपदं प्रियाऽनागमनहेतुपराधज्ञतां ध्वनयति। एवं च दूतीनिवेदनसखी-

रस्तुतिमारभते तेन विरहकातरता व्यज्यते। शम्भो शङ्करेत्यादि। सुखाधारहस्तत्वतः सुखजनकस्य तद्दाने न कोऽप्यायास इति व्यज्यते। यद्वा न केवल करएव मस्तेपि आह्लादको ऽस्तीत्याह चन्द्रशेखरेत्यादि। चदि आह्लादे। आस्तां सुखं, दुःखहरण तु तदधीनमित्याह हरेति। हरति दुःखमिति हरः। नन्वेनदस्य कथमवगतं तदाह श्रीकण्ठेति। सकललोकसंहारककालकूटगिलनेन तदवधूतमिति भावः। ननु तद्दूरीकरणे सामग्री नास्तीत्यत आह शूलिन्निति। ननु तव तापहरणे दुःखं स्यादत आह शिवेति। कल्याणरूपस्य तव न कुतश्चिद् दुःखमिति भावः। यद्वा चन्द्रशेखरेत्यनेन काममित्रस्य तस्य त्वदधीनत्वेन दुःखनिवारणोपायस्तु शङ्कर इति। यद्वा चन्द्राद्युद्दीपनेनैव कामः पीडयति इति तस्य त्वदधीनत्वेन तज्जन्यपीडाहरणे तत्पीडा निवर्त्तितैवेति ध्वन्यते। कामनाशोपि तव सुकर इत्याह हे हरेति। स्मरं हरतीति भावः। एवं च मूलच्छेदकरणमेवमेवोचितमिति व्यज्यते। श्रीकण्ठेत्यनेन सकललोकाऽनुग्रहाय यथा विषं पीतं तथा विरहिहन्तृमदननाशोपि कर्तव्यः कर्तुं युक्त इति। ननु पूर्वं हतस्यापि पुनर्जीवनात्तन्नाशो व्यर्थो ऽत आह शूलिन्निति। इदानीं शूलेन तथोपजहि यथा न पुनरुपजीवेदिति भावः। भर्गस्तुत्या कामो न पीडयिष्यतीति धिया तत्स्तुतिः॥५६॥

परिप्रश्नकरणकालमध्ये एव क्रूरविषमशरधाराऽऽघातैर्मरणमेव स्यादिति तमनादृत्य मदनरिपुमहेश्वरस्तुतिसमारम्भणेन विरहकातरता ऽभिव्यज्यते । किं तर्हि कृतमित्याह तया नायिकया । शम्भो सुखोत्पादक एवं च सुखजनकस्वभावतया मम तत्संपादनस्यौचित्यं तवेति ध्वन्यते । ननु सुखजनकत्वेपि सर्वदा तद्धत्त्वे प्रमाणाऽभावात् कथं तव तत् जननीयमत आह शङ्करेति । शं सुखं करे हस्ते यस्य । एवं च सर्वदा तव करतले एव सुखमस्तीति तद्दाने न को ऽपि तवाऽऽयास इति व्यज्यते । ननु करस्थितमपि सुखं किमर्थमन्यस्य देयमित्यत आह चन्द्रशेखरेति । चन्दयत्याह्लादयतीति चन्द्रः स शेखरे मस्तके यस्य । एवं च सुखजनकस्याऽस्य चन्द्रस्य परोपकारकत्वमालोच्यैनं स्वशिरसि धृतवानसि, तस्मात् यः परसुखकारी स तवाऽतिप्रिय इति स्वयं न कथं सुखप्रदानेन परोपकार्यसीति व्यज्यते । यद्वा न केवल तव करे सुखमपि तु सुखसंपादकश्चन्द्रोपि शिरसीति तव सुखप्रदानस्याऽतिसुलभत्वमित्याह चन्द्रशेखरेति । यद्वा करस्थितं सुखमेकस्य दत्तं चेत्तदा ऽग्रे ऽन्यस्य किं देयमिति शङ्का न कार्येत्याह चन्द्रशेखरेति । आस्तां दूरे सुखजनकत्वं दुःखहारकत्वं तु तवाऽधीनमित्याह हरेति । हरति सर्वं दुःखमिति हरः । एवं च दुःखहरणस्वभावत्वेन तत्करणस्य सुशकतया तत्संपादनस्यौचिती द्योत्यते । नन्वेतदेतस्य कथमवधृतमत आह । श्रीकण्ठेति । एवं च सकललोकदुःखदकालकूटगिलनेन समस्तजनदुःखाऽपहारकत्वस्याऽवधृतत्वात् मद्दुःखाऽपहारकत्वं न तव दुर्लभमिति ध्वन्यते । नन्वेतस्य परदुःखदूरीकरणे का वा सामग्र्यत आह । शूलिन्निति । ननु परदुःखाऽपनोदनार्थं प्रवृत्तौ स्वस्यैव चेद्दुःख-

मापद्येत तदा कथं तद्विधेयमत आह शिवेति। एवं च कल्याणस्वरूपस्य तत्र न कुतश्चिदपि दुःखमिति तत्परिहारकत्वं तवाऽतिसुलभमिति व्यज्यते। यद्वा तव सुखजनकत्वेऽपि किमर्थं तत्र संपादनीयमत आह। शङ्करेति। एवं च दानार्थं करे गृहीतं सुखं यस्मै कस्मै चिद्देयमेव, तत्राऽतिदैन्यपात्रभूताया ममैव तद्दातुमुचितमिति व्यज्यते। नन्वन्येषां मम सुलभं तत्र तु मदनबाधाऽऽक्रान्तायाः कथं तदित्यत आह चन्द्रशेखरेति। एवं च मदनमहीपतिमित्रस्य चन्द्रस्य तत्र चाऽतिप्रीतिमत्तया तद्द्वारा तद्बाधानिवारणस्याऽतिसुकरत्वमिति व्यज्यते। यद्वा मदनमित्रस्य चन्द्रस्य त्वदधीनत्वेन परस्परभेदस्य सिद्धत्वात्तन्निवारणोपायज्ञानं सुकरमिति ध्वन्यते। यद्वा मदनोऽपि चन्द्राद्युद्दीपनद्वारैव दुःखदो न स्वतस्तच्च तवाऽधीनमित्येतज्जन्यपीडानिवारणेन तत्पीडानिवारितप्रायैवेति द्योत्यते। न केवलं चन्द्रपीडानिवारणेन मदनपीडानिवारकत्व,मपि तु तन्नाशो ऽपि तव सुकर इत्याह हरेति। हरति स्मरमिति हरः। एवं च मूलोच्छेदे पुनरव्यापार इति तन्नाशकरणमेव तवोचितमिति व्यज्यते। ननु करुणार्णवशालिनो मम भगवतस्तन्नाशने दूषणमेव स्यादित्यत आह श्रीकण्ठेति। एवं च सकलजनसन्तापजनकगरलगिलनं भूषणमेव यथा तव सञ्जातं तथा विरहिजनजीवनविनाशनमदननाशो ऽपीति व्यज्यते। ननु पूर्वमेकदा विनाशितोऽपि पुनर्जीवनमवाप्तवानिति तद्विनाशो ऽनर्थक इत्यत आह शूलिन्निति। एवं चेदानीं त्रिशूलेन तथा ऽन्यास्त्रविदारणपुरःसरं विदारणीयो यथा न पुनरेतज्जीवनमिति ध्वन्यते। नन्वेतेन तथापि त्रिभुनाऽभिरामस्य कामस्य विनाशे ममाऽकल्याणमेव स्यादित्यत

परकीया विप्रलब्धा यथा ।

दत्त्वा धैर्यभुजङ्गमूर्ध्नि चरणावुल्लङ्घ्य लज्जानदी-

मङ्गीकृत्य घनाऽन्धकारपटलं तन्व्या न दृष्टः प्रियः ।

आह । शिवेति । एवं च कल्याणरूपस्य तवाऽकल्याणमस-म्भवीति तद्वधे न कापि शङ्का कार्येत्यभिव्यज्यते । त्रायस्व क्षिप्रं रक्षस्व इति पङ्कजदृशा कमलनयनया । पङ्कजपदं मलि-नतामावेदयति । सा च चिन्ताविशेषम् । भर्गस्य भृज्जत्यग्निना स्मरमिति भर्गः स्मरहरस्तस्य स्तुतिः स्तोत्रं चक्रे क्रियते स्म । भर्गपदं मदनविनाशसामर्थ्यं ध्वनयति । भर्गस्य स्तुतिकरणेन त्रस्तः कामो न पीडयिष्यतीति धियेति भावः । अत्र अप्र-स्तुतप्रशंसालङ्कारः स च काव्यलिङ्गानुप्राणितः । शार्दूलवि-क्रीडितं वृत्तम् ॥ ५६ ॥

परकीयां विप्रलब्धामुदाहरति दत्त्वेति । का चित्का-चित्प्रत्याह धैर्यभुजङ्गमूर्ध्नि धैर्यमेव भुजङ्गः सर्पः । अन्यैरनाक्रम-णीयत्वादिति भावः । तस्य मूर्धि शिरसि चरणौ पादौ दत्वा नि-क्षिप्य । धैर्यपदं त्यागाऽनर्हतां गमयति । भुजङ्गपदं क्रूरताऽतिशयं द्योतयति । स चरणदानात् हतः । मूर्ध्नीत्यनेन साहसाऽति-

दत्त्वा धैर्यभुजङ्गेति । धैर्यरूपो भुजङ्ग धैर्यं भुजङ्गश्चेति वा । धै-र्यत्वेन त्यागाऽनर्हता । भुजङ्गत्वेन क्रूरता । मूर्ध्नीत्यनेन साहसाऽतिश-यः । समुदितेन प्रियतमसङ्गमप्राचिस्तता ध्वन्यते । एवं च लज्जा-रूपां नदीं लज्जासहितामिति वा । घन निविडं यदन्धकारपटलं घनै-र्मेघैर्वा यदन्धकारपटलम् । एवञ्च तथा भीतिमत्यपि काले देशे च प्रस्थानेन साहसातिशयः । खलाऽन्धकारपटलमिति पाठे अन्धकारप-टलसदृशाः खलाः गमनादिप्रतिबन्धकत्वात् खला अन्धकारपटल-श्चेति वा । एवञ्च दुष्टगणनाऽपि न कृतेति भावः । न दृष्ट. सङ्केतस्थले

सन्तापाऽऽकुलया तया च परितः पाथोधरे गर्जति
क्रोधाक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशौ योजिते ॥५७॥

शयो व्यज्यते। दत्त्वेत्यनेन बुद्धिपूर्वकत्वमावेद्यते। चरणाविति द्विवचनेन भीतिशून्यत्वमावेद्यते। धैर्यं च भुजङ्गश्च तयोर्मूर्ध्नीत्यर्थः। एवं च धैर्योल्लङ्घनेपि मार्गे भुजङ्गमस्तके पदाऽर्पणापुरस्सराऽऽगमनेन प्रियतमसङ्गमनिमग्नचित्तत्वं द्योत्यते। लज्जानदीं लज्जा नदीव ताम्। अलङ्घ्यत्वादिति भावः। उल्लङ्घ्योत्तीर्य। यद्वा लज्जया सह नदीमपीति सहोक्तिः। किं च घनाऽन्धकारपटलं घनं निबिडमन्धकारपटलं तमःस्तोमम् अङ्गीकृत्योपगम्य। आगतयेति शेषः। यद्वा घनैर्मेघैर्यदन्धकारपटलमिति। एवं च निबिडतरतडिल्लतावितानमेव पटलमिति भीतिहेतुमत्यपि काले प्रस्थानकरणेन साहसमभिव्यज्यते। खलाऽन्धकारपटलमिति च पाठे खला दुष्टा अन्धकारपटलमिव। गमनादिप्रतिबन्धकत्वादिति भावः। एवं च दुष्टगणनापि न कृतेति साहसाऽतिशयो द्योत्यते। तन्व्या प्रियाऽदर्शनादिति भावः। प्रियः सङ्केतित इति भावः। न दृष्टः। सङ्केतस्थले इत्यर्थः। किं कृतवतीत्याह चेत्यनन्तरं सन्तापाऽऽकुलया सन्तापव्यग्रया तया पाथोधरे जलधरे। कबन्धमुदकं पाथ इत्यमरः। गर्जति सति शब्दायमाने सति। एवं चैवंविधोद्दीपनविभावतया सन्तापाऽतिशयो व्यज्यते। क्रोधाऽऽक्रान्तकृतान्तमत्तम-

इति भावः। पाथोधरे गर्जतीत्यनेनोद्दीपनाऽतिशयेन सन्तापाऽतिशयो ध्वन्यते। मेघे तादृशमहिषभ्रान्त्या त्रासाऽतिशयः। तेन विरहाऽतिशयः। क्रोधाऽऽक्रान्तत्वेन दुःसहता कृतान्तत्वेन सर्वविनाशकता मत्तत्वेनाऽनिवारणीयता कृतान्ताऽऽरूढत्वेनाऽन्याऽप्रतिकरणीयता च ॥५७॥

सामान्यवनिता विप्रलब्धा यथा ।

कपटवचनभाजा केन चिद्वारयोषा
सकलरसिकगोष्ठीवञ्चिका वञ्चिता ऽसौ ।
इति विहसति रिङ्गद्भृङ्गविक्षिप्तचक्षु-
र्विकचकुसुमकान्तिच्छद्मना केलिकुञ्जः ॥ ५८ ॥

हिषभ्रान्त्या । क्रोधेन कोपेन आक्रान्तो वशीकृतः कृतान्तो यमः । कृतान्तो यमुनाभ्रातेत्यमरः । तस्य मत्त उन्मत्तो महिषः । जिघांसयेति भावः । तस्य भ्रान्त्या भ्रमेण परितो दिक्षु विदिक्षु च दृशौ नेत्रे योजिते प्रेरिते । क्रोधपदं दुःसहतामावेदयति । आक्रान्तपदमसमाधेयतां व्यञ्जयति । कृतान्तपदं सर्वविनाशकर्ता ध्वनयति । मत्तपदमनिवारणीयतां गमयति । महिषपदं दुःखितस्य दुःखजननमनुचितमिति शून्यतां द्योतयति । निखिलं च मेघगर्ज्जने कुपितकृतान्तमहिषशब्दभ्रमेण त्रासाऽतिशयमभिव्यनक्ति । स च विरहाऽतिशयम् । अत्र भ्रान्तिमदलङ्कारः । स च रूपकतुल्ययोगितासहोक्तिभिः संसृष्टः । शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥

सामान्यवनितां विप्रलब्धामुदाहरति कपटेति । कपटवचनानि भजतीति कपटवचनभाक् तेन । भजतीत्यनेन निर-

कपटेति । गोष्ठी समूहः । रसिकत्वेन वञ्चनायोग्यता । गोष्ठीत्यनेन तस्या वञ्चकताचातुर्याऽतिशय. । चञ्चलभ्रमरा एव विक्षिप्ते चक्षुषी येन तादृश. सकलचतुरजनवञ्चनानिपुणापि केन चित्प्रतारितेति स्मयाद्धास ॥ ५८ ॥

सङ्केतस्थलं प्रति भर्तुरनागमनकारणं या चिन्तयति सा उत्का । अवधिदिवसाऽनागतप्रेयसि प्रोषितपतिकायां नाऽतिव्याप्तिः । तस्या भर्तुरवधिदिवसे भवनाऽऽगमननियम इति सङ्केतपदेन व्यावर्तनात् । अस्याश्चेष्टा । अरतिसन्तापजृम्भाऽङ्गाऽऽकृष्टिकपटरुदितस्वाऽवस्थाकथनादयः ।

न्तरकापथ्यशालित्वं द्योत्यते । केन चित्पुरुषेण सकलरसिकगोष्ठीवञ्चिका सकलाः समग्रा ये रसिकास्तरुणाः तेषां गोष्ठी समाजः तस्या वञ्चिका प्रतारिका ऽपि । कृत्रिमैर्भावैर्धनग्रहणादिभिश्चेति शेषः । सकलरसिकपदं वञ्चनायोग्यतां ध्वनयति । गोष्ठीपदं बहूनां प्रतारकतया वचनचातुरीविशेषं गमयति । प्रतारिता इति हेतोः रिङ्गद्भृङ्गविक्षिप्तचक्षुः । रिङ्गद्भृङ्गाश्चञ्चलभ्रमराः ते एव विक्षिप्ते चक्षुषी येन सः केलिकुञ्जः विकचकुसुमकान्तिच्छद्मना विकसितपुष्पव्याजेन हसतीव । सकलचतुरकामिजनवञ्चनानिपुणा ऽपि केनापि प्रतारितेति भावः । अत्रोत्प्रेक्षालङ्कारः । स चाऽतिशयोक्तिरूपकाऽपह्नुतिभिः संसृज्यते । मालिनी वृत्तम् ॥ ५८ ॥

उत्कां लक्षयति सङ्केतस्थलमिति । सङ्केतपदव्यावर्त्यमाह अवधीति । लक्षणज्ञानायाह अस्याश्चेष्टेति । अरतिर्विषयद्वेषः । अङ्गाऽऽकृष्टिरङ्गमोटनम् । कपटरुदितं लज्जादिना

अरतिर्विद्वेषः । अङ्गाकृष्टिरङ्गमोटनम् । कपटरुदितं लज्जादिना क्रियाविषयकं व्याजं कपटं तेन रुदितं स्वाऽवस्थाकथनं कालकृतस्ववृत्तान्तविशेषकथनम् ।

मुग्धा उत्का यथा ।

यन्नाद्यापि समागतः प्रिय इति प्रायः प्रपेदे परा-
मित्थं चेतसि चिन्तयन्त्यपि सखीं न व्रीडया पृच्छति ।
दीर्घं निःश्वसितं दधाति चकितं न प्रेक्षते केवलं
किं चित्पक्कपलाण्डुपाण्डुररुचिं धत्ते कपोलस्थलीम्॥५९॥

क्रियाविषयकं व्याजन्तेन रुदितम् । स्वाऽवस्थाकथनं काल-
कृतवृत्तान्तविशेषकथनम् ।

तत्र मुग्धामुदाहरति यन्नाऽद्यापीति । का चित्का चित्प्र-
साह प्रियः प्रियपदेन तदनागमनजन्यदुःखस्याऽतिशयौचित्यं
व्यज्यते । अद्यापि एतावत्कालपर्यन्तं प्रतीक्षितोऽपि न समागतो
नाऽऽगत इति कारणात् प्रायो बाहुल्येन परामन्याम् प्रपेदे
प्राप्तः । रत्यर्थमिति भावः । इदं च पदं प्रियतमे एतादृगनु-
चिताऽऽचरणकारित्वं व्यञ्जयति । संपदं भावनया मदग्रत
एव तिष्ठतीति ध्वनयति । परपदमीर्ष्यातिरेकं गमयति । इत्थम-
मुना प्रकारेण । एवं च प्रकारान्तरेणापि विचारः सूच्यते ।
चेतसि मनसि एवं चिन्तयन्त्यपि विचारयन्त्यपि सखीं वय-

यन्नाद्यापीति । प्रियत्वेन तदनागमने दुःखाऽतिशयौ-
चित्यम् । अद्यापीत्यव्ययसमुदाय एव तत्कालमित्यर्थे इति
अनागमनरूपेण हेतुना ऽनुमीयते । प्रायः प्रपेदइति । रत्यर्थमिति
शेषः । इत्थम् एवंजातीयकप्रकारेण सखीं वयस्यां तेन प्रश्नार्हतां ता-
दृश्या अपि प्रश्नाऽकरणेन लज्जाऽतिशयः । दीर्घश्वासं न करोति स-
खीभियेति भावः । चकितं भीतिचञ्चलं न प्रेक्षते तयैवेति भावः ।
विचारप्रवणतयेति भाव इत्यन्ये । धत्ते इति । विरहदशादिति भा-
वः । अत्र पक्वपलाण्डुपदयोरन्यतरस्यानर्थक्यमाभाति ॥ ५९ ॥

मध्या उत्का यथा।

आनेतुं न गता किमु प्रियसखी भीतो भुजङ्गात्किमु
क्रुद्धो वा प्रतिषेधवाचि किमसौ प्राणेश्वरो वर्त्तते।

स्यां व्रीडया लज्जया न पृच्छति। सखीपदं प्रश्नाऽर्हतां द्योतयति। तद्वत्त्वेऽपि प्रश्नाऽकरणेन लज्जायामतिशयो व्यज्यते। किं च दीर्घमायतं श्वसितं न दधाति। सखीज्ञानभियेति भावः। किं च चकितमीक्षते न चञ्चलं न प्रेक्षते पूर्ववदेवेति भावः। यद्वा विचारप्रवणतया। कथं तर्हि वर्ततइत्याह केवलमेकं किञ्चित्पक्वपलाण्डुपाण्डुररुचि किं चिन्मनाक्। पक्वः परिणतो यः पलाण्डुः कन्दविशेषस्तद्वत्पाण्डुरा हरिता रुचिः कान्तिर्यस्यास्तां कपोलस्थलीं गण्डतटीं धत्ते बिभर्ति। विरहवशादिति भावः। पक्वपदेन शोभाऽतिशयो द्योत्यते। वस्तुतस्तु पक्वपाण्डुरपदयोरन्यतराऽऽनर्थक्यमाभाति। अत्र संशयालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ५९॥

आनेतुमिति। प्रियमिति शेषः। प्रियसखीत्वेनाऽऽनयनप्रयत्नवत्त्वं व्यज्यते। किमु न गता काक्वा गतैवेत्यर्थः। मार्गप्रतिबन्धादागतस्तत्राऽऽह भुजङ्गाद्भीतः किमु। अत्रापि काक्वा न भीत इत्यर्थः। तथाविधपौरुषशालिनो भीत्यसम्भवादिति भावः। ननु कोपोक्तिवशादेव नाऽऽगतस्तत्राह क्रुद्धो वेति। कुपितः किमु नेत्यर्थः। रसाभिज्ञस्य मय्यासक्तिमतस्तस्य वाङ्मात्रेण न कोऽपि कोप इति भावः। नन्वागमने कारणाऽभावान्नाऽऽगतस्तत्राह प्राणेश्वर इति। किमसौ प्राणेश्वरो न अपि तु प्राणेश्वर एवेति भावः। विप्रकृष्टेऽप्यसावित्यनेन प्राक्तनाऽत्यन्तसंयोगो ध्वन्यते। प्राणेश्वरपदेनाऽवश्यं प्राणदुःखनिवारणौचित्यं ध्वन्यते। यद्वा किंप्रतिषेधवाचि कुत्सिततद्ध-

इत्थं कर्णसुवर्णकेतकरजःपातोपघातच्छला-
दक्ष्णोः कापि नवोढनीरजमुखी बाष्पोदकं मुञ्चति॥६०॥

मध्यामुदाहरति आनेतुमिति । का चित्कां चित्प्रत्याह प्रियसखी प्रिया चाऽसौ सखी च प्रोषितेति भावः। एवं चाऽऽनयनप्रयत्नवत्त्वं द्योत्यते । आनेतुम् अर्थात्प्रियं किमु न गतेति काक्वा गतैवेत्यर्थः । यत्तु न गतेति यथाश्रुतमेव व्याचख्युस्तन्न । प्रियपक्षाऽसङ्गतेः । ननु मार्गप्रतिबन्धकवशादत्र नाऽऽगतो भविष्यतीत्यत आह भीतो भुजङ्गात् सर्पात् किमु भीत इति काक्वा न भीत इत्यर्थः । तथाविधपौरुषशालिनो न भुजङ्गभीतिरिति भावः । यत्तु भुजङ्गात् वेश्यापतेरिति व्याख्यानं तत्स्वीयात्वहान्यापत्त्या ऽपव्याख्यानम् । ननु कोपोक्तिवशादेव नाऽऽगत इत्यत आह क्रुद्धः किं प्रतिषेधवाचि इति । प्र-

चने असौ प्राणेश्वरः किं क्रुद्धो वर्तते वा काक्वा न वर्तत इत्यर्थः । प्राणाऽपराधएव क्रोधो युक्तो न तूदासीनाऽसमीचीनवचसीति व्यज्यते । एवमनागमनहेत्वभावेपि तच्चिन्ताऽतिशयं ध्वनयति । नवा चासावूढं धृतं यन्नीरजं कमलं तत्सदृशमुखी चेति कर्मधारयः । ऊढपदेन चिरधृतत्वेन क्लिष्टत्वं न वेत्यनेन मदनवत्तया चिन्तायोग्यत्वं नीरजत्वेन सुकुमारतामावेदयति । अत्र ऽवतंसीकृतशोभनवर्णकेतककुसुमरज पातजन्यपीडामिषात् अश्रु त्यजति रजस्त्वेन सूक्ष्मत्वात् शीघ्रनिःसरणाऽयोग्यता लब्धा अविरलत्वं द्योत्यते । पातपदमबुद्धिपूर्वकतां गमयति । एवं छलेन दुःखजाऽश्रुगोपनेन लज्जावत्त्वम् । सखीप्रेषणादिना मदनवत्त्वञ्च तेन मध्यात्वम् । प्रेषितसखीपरावृत्तेः प्रागेव चिन्तावत्त्वादुत्कात्वम् ॥ ६० ॥

तिपथवचने कुपितः किमिति काका न कुपित इत्यर्थः । एवं च रसाऽभिज्ञस्य प्रत्यासक्तिविशेषवतस्तस्य निषेधवाङ्मात्रेण न कोपि कोप इति भावः । ननु किमर्थं नागत इत्यत आह असौ प्रियतमः प्राणेश्वरः प्राणस्वामी किमु वर्तते नास्तीति काका प्राणेश्वरो ऽस्त्येवेत्यर्थः । विप्रकृष्टे ऽप्यमाविति निर्देशेन प्राक्तनाऽत्यन्तयोगो द्योत्यते । प्राणेश्वरपदेनाऽऽवश्यकप्राणदुःखनिवारकत्वमावेद्यते । सेवकदुःखं स्वामिनैव निवार्यते इति इदानीमपि प्राणपीडापरिहारकारिमतिमत्त्वं ध्वन्यते । यद्वा किंप्रतिषेधवाचि कुत्सितनिषेधवचने असौ प्राणेश्वरः किं क्रुद्धो वर्तते इति काका न वर्तते इत्यर्थः । प्राणेश्वरपदेन प्राणाऽपराधे एव कुपितत्वं युक्तं न तूदासीनाऽसमीचीनवचसीति व्यज्यते । असाविति अनन्यसाधारणविधेयत्व व्यज्यते । एवं चाऽनागमनहेत्वभावे ऽप्यनागमने चिन्ताऽतिशयं व्यञ्जयति । इत्थममुना प्रकारेण चिन्तयन्तीति शेषः । कापि अनिर्वचनीयगुणा नवोढनीरजमुखी ऊढं धृतं यत् नीरज कमलं तद्वन्मुखं यस्याः नवा तरुणी चासावूढनीरजमुखी चेति विग्रहः । नवपदेन मदनवत्त्वात् चिन्तायोग्यत्वं व्यज्यते । ऊढपदेन स्थानभ्रष्टत्वं तेन चाऽश्लिष्टत्व द्योत्यते । नीरजपदं सुकुमारतामावेदयति । यत्तु नवोढा चासौ नीरजमुखी चेति विग्रह इति तन्न । मध्यात्वाऽनुपपत्तेः । यच्च नवोढं तरुणां यन्नीरजमिति व्याख्यानं तन्न । चिन्ताक्लिष्टेन मुखेन तरुणाकमलसाम्याऽनुपपत्त्योढपदाऽनर्थकतया चाऽपव्याख्यानमेव । वस्तुतस्तु नवोढं तत्कालाहृतमित्यर्थः । एवं चाऽश्रुबाहुल्य व्यज्यते । अक्ष्णोर्नेत्रयोः कर्णसुवर्णकेतकरजःपातोपघातच्छलात् । कर्णयोः श्रोत्रयोः शोभनवर्णकेतकपुष्पयोरवतसीकृतयो-

प्रौढा उत्का यथा ।

भ्रातर्न्निकुञ्ज सखि यूथि रसाल बन्धो
मातस्तमस्विनि पितस्तिमिर प्रसीद ।
पृच्छामि किं चिदिति नीरधराभिरामो
दामोदरः कथय किं न समाजगाम ॥ ६१ ॥

र्यद्रजस्तस्य पातः पतनं तेनोपघातः पीडा तन्निषात् । रजःपदं सूक्ष्मतां सा च शीघ्रं निःसारणे ऽयोग्यतां ध्वनयति । पातपदमबुद्धिपूर्वकतां गमयति । बाष्पोदकं मुञ्चति । एतेन जलविरहितत्वं ध्वन्यते । एव च छलेन दुःखजाऽश्रुगोपनेन लज्जावत्त्वं सखीप्रेषणादिना च मदनवत्त्वं तेन च मध्यात्व व्यज्यते । प्रेषितसखीपरावृत्तेः प्राग्वचिन्तावत्त्वादुत्कात्वमवगम्यते । अत्र स्फुट एवाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६० ॥

प्रौढामुत्कामुदाहरति । भ्रातर्निकुञ्जेति । भो भ्रातः निकुञ्ज निकुञ्जस्य भ्रातृत्वं च सर्वमनीषितसंपादकत्वादिति भावः । तथा भो सखि यूथि पुष्पलते । सखीत्वं चोद्दीपनत्वि-

भ्रातरिति । निकुञ्जस्य भ्रातृत्वं सर्वमनीषितसम्पादकत्वात् । यूथ्या सखीत्वं चोद्दीपनतया प्रियतमस्य स्वस्मिन्नासक्तिविधायकत्वात् । रसालस्य बन्धुत्वं चान्दोलादिसहनात् । तमस्विन्या मातृत्वञ्चैवंविधबहुकार्यगोपनात् । तिमिरस्य पितृत्वञ्च रजनीक्रियमाणस्वाऽपराधगोपनसहायसम्पादकत्वात् । रजनीसंयोगित्वाच्च । प्रसीदेति प्रत्येकान्वयि । नीरधराऽभिराम इत्यनेन रजन्यामन्यजनाऽपरिचेयत्वम् । तेन चाऽऽगमनसौकर्यम् । किं चिदित्यनेनाऽवश्यकथनीयत्वम् । एवञ्चात्र वने भवन्त एव तत्रापि मत्सबन्धिन इति प्रश्नकरणकथनौचित्यं व्यज्यते ॥ ६१ ॥

परकीया उत्का यथा।

स्नातं वारिदवारिभिर्विरचितो वासो घने कानने
शीतैश्चन्दनबिन्दुभिर्मनसि जो देवः समाराधितः।

भावतया प्रियतमस्य स्वस्मिन्नासक्तिविशेषविधायकत्वादिति भावः। तथा च भो रसाल बन्धो सुहृदाम्र। आम्रश्चूतो रसालोऽसाविसमरः। सुहृत्त्वं च दोलाऽऽन्दोलनादिसहनादिति भावः। तथा मातस्तमस्विनि जननीरूपे रजनि। विभावरीतमस्विन्याविसमरः। मातृत्वं चैवंविधकार्यगोपकत्वादिति भावः। तथा पितस्तिमिर जनकरूपाऽन्धकार। पितृत्वं च रजनीसंयोगित्वात् तत्क्रियमाणमदपराधगोपनसाहाय्यसम्पादकत्वाच्च तत्सनाथतया रजन्यप्येतादृशाऽकार्यगोपनसमर्थेति भावः। तावता किमित्यत आह नीरधराऽभिरामः सजलजलदकान्तिमनोहारी दामोदरः कृष्णः। नीरधराभिराम इत्यनेन रजन्यामन्यजनाऽपरिचितत्वं तेन चाऽऽगमनसौकर्य्यं व्यज्यते। दामोदरपदं बन्धनं तच्चव्यसनशालित्वं गमयति। एवं चाऽत्र वने भवन्त एव तत्रापि च मत्संबन्धिन इति प्रश्नकरणकथनोभयौचित्यं व्यज्यते। वसन्ततिलकावृत्तम॥ ६१॥

परकीयामुत्कामुदाहरति स्नातमिति। कापि सखी वक्ति हे सखीति संबुद्धिरध्याहर्तव्या। तदनुपादानं त्वनुसन्धान-

स्नातमिति। हे सखीति सम्बुद्धिरध्याहार्य्यो। तदनुपादानं तु अनुसन्धानराहित्यादुत्कण्ठातिशयं व्यञ्जयति। वारिदेति। तेन पङ्किलमार्गगमनेन क्लेशातिशयः तपस्विना च व्यज्यते। घने कानने घनत्वेन जनसञ्चाराऽयोग्यतया भयशालिता वैराग्यञ्च। मनसिजः कामः मनःकल्पनाविषयः आराध्यदेवश्च। शीतैरतिशीतैरित्यर्थः। समारा-

नीता जागरणव्रतेन रजनी व्रीडा कृता दक्षिणा
तप्तं किं न तपस्तथापि स कथं नाऽद्यापि नेत्राऽतिथिः॥ ६२॥

राद्रियं तच्चौत्कण्ठ्यातिशयं पक्षे विरक्ततामावेदयति । वारिदव्वारिभिः एवं च पङ्किले ऽपि मार्गे ऽनुगमने क्लेशाऽतिशयः पक्षे चाऽऽनन्तं तपस्विता ध्वन्यते। स्नातम् एवं वर्षासाधनं सम्पादितमिति द्योत्यते । किं च घने निविडे कानने वने वासो वसतिः विरचितः कृतः । घनपदं वनसञ्चाराऽयोग्यतां सा च भयशालितां पक्षे वैराग्यवत्तां व्यञ्जयति । किं च शीतैरतिशीतलैरित्यर्थः । चन्दनविन्दुभिः श्रीखण्डद्रवपृषतैः मनसिजो मदनः पक्षे मनःकल्पनाविषयः देव आराध्य इति यावत् । समाराधितो विधिना सेवितः । कौमुद्यां कस्यापि दृग्विषयता मा भवत्विति धिया वर्षास्वपि शीतलचन्दनाऽनुलेपनमिति शरीरे ऽप्यासक्त्यभावो द्योत्यते । तेन च प्रेमाऽतिशयो व्यज्यते । व्यर्थकत्वेन व्रतित्वम् । पुष्पैश्चन्दनविन्दुभिरिति पाठे ऽपि शीतलत्वं ध्वन्यते । रजनी रात्रिः । जागरणव्रतेन निद्रां न करिष्यामीति सङ्कल्पेन नीता व्यतिक्रान्ता । किं च व्रीडा लज्जा प्रियतमप्राप्तिप्रतिबन्धकीभूतेति भावः । पक्षे एषणाऽऽरा-

धितो विधिना पूजितः।जागरणव्रतेन निद्रां न करिष्ये इति सङ्कल्पेन व्रीडा प्रियतमप्राप्तिप्रतिबन्धकीभूता दक्षिणा कृता सङ्कल्पपुरःसरं त्यक्ता। दक्षिणात्वेन पुनरनुपादेयता तया ऽतिशयितासक्तिर्व्यज्यते। तपः क्लेशजातं तपश्च । यामिनीचरमसमयावध्यपि नेत्राऽतिथिः तद्गोचरः । तथा च यस्य दर्शनमेव दुर्लभं तदालिङ्गनादि तु दूरापास्तमिति भावः॥ ६२॥

सामान्यवनिता उत्का यथा ।

कथं न कान्तः समुपैति कुञ्ज-
मित्थंचिरं चेतसि चिन्तयन्ती ।
अस्नातयन्निष्पतदश्रुधारा
वाराङ्गना कापि धनाऽभिलाषात् ॥ ६३ ॥

गादिति भावः । दक्षिणा कृता सङ्कल्पपुरःसरं सक्तेत्यर्थः । दक्षिणापदं पुनरनुपादेयतां सा चाऽतिशयिताऽऽसक्तिं व्यनक्ति । इत्थं किं न तपस्तप्यते शरीरमनेनेति तपः क्लेशजातं तप्तं कृतमपि तु सर्वमपीत्यर्थः । तथाप्येवं कृते ऽपि स प्रियतमः अद्यापि यामिनीसमयचरमाऽवध्यपि नेत्राऽतिथिः नयनगोचर इति यावत् । एवं च यत्र दृग्गोचरतामात्रमपि न, तत्र कुत्राऽऽलिङ्गनचुम्बनादीनीति भावः । कथं न किमिति न । तथा चाऽनागमनकारणं कथयेति भावः । एवं चैतादृशक्लेशविशेषेणापि न मे दृङ्मात्रगोचर इति मन्दभाग्यता ऽभिव्यज्यते । अन्यो ऽपि स्नानादिपूर्वकं सकामो देवतामाराधयतीति लौकिकस्नानवनवितामसाङ्कल्पिकदेवतापूजनरजनीजागरणदक्षिणान्तव्रतविधाने कृते ऽपि सकलजगत्कर्तृत्वेन प्रसिद्धः परमात्मा क्षणमपि नयनगोचरो न जायते तत्कथय केनोपायेन भावीति गुप्तपरपुरुषाऽभिलापवत्तया परकीयात्वम् । उत्कात्वमत्यन्तं स्फुटम् । शार्दूलविक्रीडितं वृत्तम् ॥ ६२ ॥

वेश्यामुत्कामुदाहरति कथमिति । कश्चन कं चन वदति कान्तः कामनाविषयः धनदायित्वादिति भावः । कुञ्जं स-

कथं नेति । तथा च तदनागमनकारणं कथयेत्यर्थः । अन्यस्यापि स्नानादिपूर्वं देवताराधने दक्षिणान्ते कृतेऽपि परमात्मा न नयनगोचर इति कोऽयं विधिरिति गुप्तपरपुरुषाऽभिलाषः ॥ ६३ ॥

अद्य मे प्रियवासर इति निश्चित्य या सुरतसामग्रीं सज्जीकरोति सा वासकसज्जा। वासको वारः। अस्याश्चेष्टा। मनोरथसखीपरिहासदूतीप्रश्नसामग्रीसम्पादनमार्गविलोकनादयः।

मुग्धा वासकसज्जा यथा।

हारं गुम्फति तारकाऽतिरुचिरं ग्रश्नाति काञ्चीलतां
दीपं न्यस्यति किं तु तत्र बहुलं स्नेहं न दत्ते पुनः।

क्कृतितम्। कथं किंनिमित्तं न समुपैति नाऽऽयाति इत्थममुना प्रकारेण चेतसि चिरं चिरकालं चिन्तयन्ती विचारयन्ती घनाऽभिलाषात् निष्पतदश्रुधाराः निष्पतन्ति यान्यश्रूणि तेषां या धारास्ताः। अस्रावयत्पातयामास। बहुतरं रुरोदेति भावः। इतरत्स्पष्टम्। उपजातिर्वृत्तम् ॥ ६३ ॥

वासकसज्जां लक्षयति। अद्येत्यादि। प्रियवासर इति प्रिया ऽऽगमनवासर इत्यर्थः। वारः सूर्यादिदिवस इति वारपद निश्चयोत्तरकालोपलक्षकम्। यत्तु वासको वार इति नाम्नि वासकशब्दं व्याचष्टे इत्याहुः तदभिधानाऽदर्शनादनुपादेयम्। प्रियागमननिर्णयोत्तरसमयसुरतसामग्रीसंपादननिपुणत्वं वासकसज्जात्वमित्यर्थः। तस्याश्चेष्टामाह मनोरथेत्यादि। मनोरथो मानसनानाकल्पनाजातमित्यर्थः।

वार इत्युपलक्षणं निश्चयोत्तरकालस्य। प्रियागमननिश्चयोत्तरसुरतसामग्रीसम्पादननिपुणत्वमित्यर्थः। मनोरथः मानसनानाकल्पनाजातमित्यर्थः।

हारमिति। तारकावदतिरुचिरं हारं मुक्तावलिम्। तारकान्तीति पाठे ऽतितरां शुद्धा कान्तिरस्या इत्यर्थः। मुक्ताशुद्धौ च तारः स्यादित्यमरः। काञ्चीलतेव तां धत्ते। भाविप्रकाशे

आलीनामिति वासकस्य रजनौ कामाऽनुरूपां क्रियां
साचिस्मेरमुखी नवोढसुमुखी दूरात्समुद्वीक्षते ॥६४॥

तत्र मुग्धां वासकसज्जामुदाहरति हारमिति। का चित्कां चित्सत्याह तारकाऽतिरुचिरं तारकावदतिरुचिरम् अत्युज्ज्वलं हार मुक्तावलिम् गुम्फति सन्दर्भयति। मुक्ताप्रकरं हारत्वेन करोतीत्यर्थः। काञ्चीलतां मेखला लतेव तां ग्रन्थाति सन्निवेशविशेषापन्नां करोति। किं च दीपं न्यस्यति स्थापयति किंतु एकं तत्र दीपभाजने बहुल स्नेहं बहुलं तैलं न दत्ते न ददाति। भाविप्रकाशे प्रियकरग्रहणादिलज्जयेति भावः। पुनः कि चेत्यर्थः। वासकस्य उष्यतेऽस्मिन्निति वासः वास एवेति वासकः प्रासाद इत्यर्थः। तस्य आलीनां तत्संबन्धिसखीनां निगूढामिति शेषः। कामाऽनुरूपां मदनाऽनुरूपामिच्छाऽनुरूपां वा क्रियां रजनौ रात्रौ कस्याप्यन्यस्य ज्ञात मा भवत्विति

प्रियकरग्रहणादिलज्जयेति। पुनरिति किं चेत्यर्थः। इत्यनेन प्रकारेण उष्यते ऽस्मिन्निति वासः स एव वासकः प्रासादः तस्याऽऽलीनां तत्सम्बन्धिसखीनां निगूढामिति शेषः। कामाऽनुरूपामिच्छानुरूपां वा क्रियां सामग्रीसम्पादनरूपां रजनौ रात्रौ। निगूढत्वं च कस्याप्यन्यस्य ज्ञान मा भवत्विति धिया कुर्वन्तीति शेष। एवं च सार्वकालिककेलिप्रासादस्थसखीसमूहं प्रत्यपि सुरतसामग्रीगोपनकारितया ऽतिशयितलज्जावत्त्वं ध्वन्यते साचि तिर्यक् स्मेरमुखी। अन्यलज्जयेति भावः। उद्वीक्षते अर्थात्प्रियमार्गमित्यर्थ। यद्वा आलीनां कर्तव्यां हारगुम्फनादिक्रियां वासकः प्रियसन्निधानदिने तत्संबन्धिरात्रौ कामाऽनुरूपां क्रियां साचिस्मेरमुखी कथमतिधूर्ता इमाः मदन्तर्गतमकुर्वन् इति धियेति भावः। तिर्यक् स्मेरञ्च सखीपरिहासभिया समुद्वीक्षते पश्यतीत्यर्थः॥ ६४॥

मध्या वासकसज्जा यथा ।

शिल्पं दर्शयितुं करोति कुतुकात्कल्हारहारस्रजं
चित्रप्रेक्षणकैतवेन किमपि द्वारं समुद्वीक्षते ।

धियेति भावः । वस्तुतः प्रियाऽऽगमननिश्चयोत्तरकालोपलक्षकं रजनीपदं कुर्वन्ति । एवं च सार्वकालिककेलिप्रासादस्थसखीसमूहं प्रत्यपि सुरतसामग्रीगोपनकारितया ऽतिशयितलज्जावत्त्वं ध्वन्यते । साचिस्मेरमुखी साचि तिर्यक् । अन्यलज्जयेति भावः । स्मेरं सहासम् । प्रियागमनादिति भावः । मुखं वदनं यस्याः नवोढसुमुखी मुग्धाङ्गना दूरात्समुद्वीक्षते । विलोकयति अर्थात्प्रियपद्धतिमित्यर्थः । इतरत्स्पष्टम् । वस्तुतो वासकस्य रजनौ उच्यते ऽस्मिन्प्रियेण सहेति वासः वास एव वासकः प्रियसंनिधानदिनम् । तत्सम्बद्धायां रजनौ साचिस्मेरमुखी एता अतिधूर्ता निन्दन्ति काश्चिदिति धियेति भावः । नवोढसुमुखी दूरात्सखीविरहाद्भियेति भावः । समुद्वीक्षते । शार्दूलविक्रीडितं वृत्तम् ॥ ६४ ॥

मध्यां वासकसज्जामुदाहरति । का चित्कां चित्प्रत्याह कुतुकात् मिथ्याकुतूहलात् । कुतुकं तु कुतूहलमित्यमरः । निरपेक्षतयेति भावः । शिल्पं कलाकौशलम् । शिल्पं कर्म कला-

शिल्पमिति । कुतुकात् मिथ्याकुतूहलात् निरपेक्षतयैवेति भावः । शिल्पं कलाकौशलं दर्शयितुमन्याऽपेक्षतयेति भावः । कह्लाराणां पद्मानां हारवन्मुक्तावलीवत् स्रजं मालाम् । हारपदं गुच्छादिवैचित्र्याय । चित्रस्य अर्थाद्द्वारभित्तिस्थस्य चित्रत्वेन विलोकनीयता ध्वन्यते । किमपीपच्चिर्यक् लज्जयेति भावः । वीक्षते प्रियागमनजिज्ञा-

गृह्णात्याभरणं नवं सहचरीभूषाजिगीषामिषा-
दित्थं पद्मदृशः प्रतीत्य चरितं स्मेराननोऽभूत्स्मरः॥ ६५॥

दिकमिसगरः। दर्शयितुं प्रकटयितुम्। अन्याऽपेक्षयेति भावः। कह्लारहारस्रजं कह्लाराणां सौगन्धिकानां हारवद् मुक्तावलीवद् स्रक् माला। हारपदं गुच्छादिवैचित्र्यद्योतनार्थम्। करोति। किं च चित्रप्रेक्षणकैतवेन चित्रस्य अर्थाद् द्वारस्थस्य प्रेक्षणमवलोकनं तस्य कैतवेन कपटेन। चित्रपदं विलोकनीयतां द्योतयति। किमपि ईषत्तिर्यगिति यावत्। लज्जयेति भावः। द्वार देहलीं समुद्वीक्षते विलोकयति। प्रियाऽऽगमनजिज्ञासयेति भावः। किं च सहचरीभूषाजिगीषामिषात्। सहचरीणां यानि भूषणानि तेषां जिगीषा ज्ञातुमिच्छा तस्य मिषाद् भवद्भूषणादधिककान्तिभाञ्जि मद्भूषणानीति कपटेनेति भावः। नवं नूतनमाभरणम् एकत्वमविवक्षितम्। गृह्णाति। इत्थं पूर्वोक्तप्रकारेण पद्मदृशः कमलनयनायाः चरितमाचरणम् प्रतीत्य ज्ञात्वा प्रतीत्येति पदं चेतोभवस्याप्यदृश्यतामावेदयन्नत्यन्तनिगूढत्वं चेष्टितस्य द्योतयति। स्मरो मदनः स्मेरोऽऽननो विकसिताऽऽननः प्राप्तोयं मत्प्रभुतासमय इति धियेति भावः। एवं चाऽधिकमदनबाधावत्त्वं व्यज्यते। यद्वा स्मेर

सयेति भावः। सखीभूषणजिगीषामिषात् भवद्भूषणादप्यधिककान्तिमन्मदीयभूषणमिति कपटेन आभरणं जात्यभिप्रायेणैकत्वम्। प्रतीत्य ज्ञात्वा। अनेन चेतोभुवो ऽप्यदृश्यतया ऽतिनिगूढत्वं चेष्टितस्य द्योत्यते। स्मेरत्वं प्राप्तो ऽय मत्प्रभुतासमय इति धिया तेनाऽधिकमदनत्वम्। यद्वा सखीः प्रतारयति इति विस्मयेन हासः। अत्र कैतवपदेन लज्जावत्त्वम्। स्मेराननत्वेन समदनत्वमतो मध्यात्वम् ॥६५॥

प्रगल्भा वासकसज्जा यथा ।

कृतं वपुषि भूषणं चिकुरधोरणी धूपिता
कृता शयनसन्निधौ क्रमुकवीटिकासम्भृतिः ।
अकारि हरिणीदृशा भवनमेत्य देहत्विषा
स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्दिनम् ॥ ६६ ॥

सहासम् आननं यस्य कथमियं सखीसमूहमपि प्रतारयतीति विस्मयेनेति भावः । अभुज्ञाता । कैतवादिपद लज्जावत्त्वं स्मेरादिपद समदनत्वं ध्वनयति । तच्च मध्यात्वम् । शार्दूलविक्रीडितं वृत्तम् ॥ ६५ ॥

प्रगल्भां वासकसज्जामुदाहरति कृतमिति । का चित्का चित्प्रसाद्य वपुषि शरीरे भूषणमलङ्करणं कृतं संपादितम् । किं च चिकुरधोरणी चिकुरा वालाः । चिकुरः कुन्तलो वाल इत्यमरः । तेषां धोरणी सङ्घातविशेषः समुदायो वा धूपिताऽधिवासिता । किं च शयनसन्निधौ पर्यङ्कनिकटे क्रमुकवीटिकासंभृतिः क्रमुकानि पूगशकलानि वीटिकाश्च तयोः सम्भृतिः सम्भारः कृतः संपादितः । एतादृशा हरिणनेत्रया । एवं च मार्गमेक्षणात्व द्योत्यते । हरिणीदृशेति प्रागप्यन्वेति । भवनं केलिसदनम् एत्याऽऽगत्य । एव च प्रियपद्धतिदर्शनाय पुनर्व-

कृतमिति । धोरणी समुदायः क्रमुकाणि वीटिकाश्चेति द्वन्द्वः । कृतेति शेष. । स्फुरत्कनकेति । देहत्विषा करणभूतया स्फुरन्त्य शोभाशालिन्य' कनककेतकास्तत्कुसुमकान्तिभि तेन केतकपुष्पाणां स्वतो न शोभाशालित्वमिति ध्वन्यते । ताभिर्दुर्दिनं दुस्तिरस्कृतमिति दु. स्यात्कष्टनिषेधयोरिति विश्व. । एतेन देहस्यातिशयितकान्तिमत्त्वम् ॥ ६६ ॥

मनोरथश्च यथा।

आवयोरङ्गयोर्द्वैते भूयो विरहविप्लवः।

अद्वैते च स्मितं स्फीतं न स्यादन्योन्यवीक्षणम्॥६७॥

हिर्गमनमावेद्यते। देहत्विषा शरीरकान्त्या करणभूतया स्फुरत्कनककेतकीकुसुमकान्तिभिः स्फुरन्त्यः शोभाशालिन्यः। एवं च कनककेतकीकुसुमानां स्वतो न शोभाशालित्वमिति द्योत्यते। याः कनककेतकीनां पुष्पदीप्तयः ताभिर्दिनं दिवसरूपं समयं दुर्निषिद्धं तिरस्कृतमिति यावत्। दुः स्यात्कष्टनिषेधयोरिति विश्वः। अकारि कृतम्। एवं च प्रकाशरूपस्यापि दिवसस्य देहसम्बन्धिकनककेतकीकुसुममालादीप्तिभिस्तिरस्कारकारितया ऽतिशयितकान्तिमत्ता देहे ध्वन्यते। यद्वा कृतमित्यादिषु णिजर्थे लक्षणा। भवनम् एत्य देहशोभाशोभिकनककेतकीपुष्पमालादीप्तिभिर्दुर्दिनं कष्टदिनम् अकारि कष्टत्वं चाऽतिवाहितुमशक्यतया। अथ वा देहत्विषा कनककेतकीकुसुमकान्तिभिः अर्थात्सुरतसामग्रीत्वेन सपादितकेतकीकुसुमदीप्तिभिः दुर्दिनं मेघच्छन्नं दिनं स्फुरत्सप्रकाशम् अकारि। प्रियस्याऽऽगमनसौकर्यायेति भावः। एवं च कनककेतकीकुसुमदीप्तीनां प्रकाशकतया दुर्दिनत्वसंपादकत्वमसम्भवीति दूषणमपास्तम्। अत्र सहोक्तिरलङ्कारः। पृथ्वीवृत्तम्॥ ६६॥

आवयोरिति। आवयोर्मम प्रियस्य च द्वैते भेदे विप्लवो विरहदुःखम्। अद्वैते ऽभेदे स्फीतम् अतिशयशालिपरस्पराऽभेदेनेति भावः। स्मितं हसितम्। अन्योन्यवीक्षणं न स्यादित्यन्वयः। सर्वत्र चेष्टायाः पृथगनुदाहरणादत्रैवैतदुदाहरणमयुक्तमिति प्रतिभाति॥६७॥

परकीया वासकसज्जा यथा।

श्वश्रूं स्वापयति च्छलेन च तिरोधत्ते प्रदीपाङ्कुरं
धत्ते सौधकपोतपोतनिनदैः साङ्केतिकं चेष्टितम्।

चेष्टासु उक्तं मनोरथमुदाहरति आवयोरिति। कापि स्वच्छन्दक्रीडाऽभिलाषिणी वक्ति आवयोर्मम प्रियस्य च अस्मदो युवावौ द्विवचने इत्यादेशः। अङ्गयोः शरीरयोः द्वैते द्वयोर्भावः द्वितं द्वितमेव द्वैतम्। द्वैविध्यमित्यर्थः। तस्मिन्सति भूयः पुनरपि विरहविप्लवः दुःखं भावीति शेषः। अस्तु तर्हि एवमैक्यमेवा ऽत आह अद्वैते प्रियेण सहाऽभेदे स्फीतम् अतिशयशालि परस्परप्रसादेनेति भावः। स्मितं हसितं च इत्यपरम्। अन्योन्यवीक्षणं साऽऽकूतपरस्पराऽवलोकनं न स्यान्न भवेत्। अथ वा ऽङ्गयोरभेदो ऽस्मिताद्यभावः। एवं चाऽर्द्धनारीनाट्यसादृश्यं भवत्विति ध्वन्यते। एवंविधाऽभिलाषस्य स्वच्छन्दं प्रवृत्तत्वेन मनोरथत्वम्। अत्र सन्देहालङ्कारः। सर्वत्र चेष्टायाः पृथगनुदाहरणादत्रैव तदुदाहरणमयुक्तमिति प्रतिभाति। अथ वा मनोरथैकनायकं प्रतीयमुक्तिः। पथ्यावक्त्रं वृत्तम्॥ ६७॥

परकीयां वासकसज्जामुदाहरति। श्वश्रूमिति। काचित्कां चित्प्रसाह श्वश्रूं पतिजननीं छलेन अतिप्रभाते मा-

श्वश्रूमिति। श्वश्रूं छलेन स्वापयति। मम मातृसदने महोत्सवविलोकनाय गन्तव्यमित्यादिकपटेन बहुलप्रकाशकतया सन्तापकतया च भवत्या न निद्रेत्यादिकपटेन प्रदीपाङ्कुरमाच्छादयति भित्त्याद्यन्तरितं करोतीति सूक्ष्मता सा चाऽल्पप्रकाशतां ध्वनयति। साङ्केतिकं चेष्टितमहमत्राऽस्मीति ज्ञापकं प्रासादकलरवशब्दैः करोति।

शश्वत्पार्श्वविवर्त्तिनाऽङ्गलतिकं लोलत्कपोलद्युति
क्वापि क्वापि कराम्बुजं प्रियधिया तल्पान्तिके न्यस्यति ६८

तृसदने महोत्सवविलोकनाय गन्तव्यमस्तीत्यादिकपटेन स्वापयति निद्रापयति । बहुलप्रकाशकतया सन्तापकतया च नायाति भवतीनां निद्रेत्यादिकपटेन। प्रदीपाङ्कुरम् अङ्कुरपदं सूक्ष्मतां सा चाऽल्पप्रकाशकतां व्यञ्जयति । तिरोधत्ते भित्त्याद्यन्तरितत्वेनाऽऽच्छाद्यतां व्यञ्जयति । एवं च प्रियागमनसौकर्यातिशयो ध्वन्यते । किं च सौधकपोतपोतनिनदैः प्रासादकलरववालशब्दैः साङ्केतिकं सङ्केतसम्बन्धि चेष्टितम् । एव च सौधसम्बन्धोत्कीर्तनेन नैकट्यं तेन चाऽन्यथा ऽनाशङ्कनीयत्वं व्यज्यते । पोतपदेन वारं वारं शब्दकरणौचित्यम् । अहमत्रास्मीति ज्ञापकमित्यर्थः । शब्दं व्यापारम् एकवचनमेकरूपतां द्योतयति । धत्ते ऽङ्गीकरोति । एवं च कपोतपोतनिनद एवायं नाऽन्य इत्यप्रकटपरपुरुषाऽनुरागो व्यज्यते । किं च शश्वत्पार्श्वविवर्त्तिताऽङ्गलतिकं शश्वन्निरन्तरम् पार्श्वाभ्यां विवर्तिता परावर्तिता तल्पोपान्तोभयविलोकनार्थमिति भावः । अङ्गलतिका गात्रयष्टिर्यत्र क्रियायाम् । तथा लोलत्कपोलद्युति लोलन्ती चञ्चला । परिवर्तनैरिति भावः । कपोलद्युतिर्गण्ड-

प्रासादसम्बन्धेनाऽतिरिच्यते नान्यथा शङ्कनीयमिति कपोतशब्देन वारं वारं शब्दकरणौचित्यं कपोतपोतनिनद एवायं नान्य इत्यपह्नुत्या अप्रकटपरपुरुषाऽनुरागो व्यज्यते । तल्पोभयप्रान्तविलोकनार्थं निरन्तरं पार्श्वाभ्यां परिवर्तिता अङ्गलतिका यस्यां क्रियायां यथा भवति तथा प्रियागमनसन्तोषेण मुखस्याऽतिप्रसन्नतया चञ्चलकपोलद्युतिचाञ्चल्यं परिवर्तते लोचनमिति ॥ ६८ ॥

सामान्यवनिता वासकसज्जा यथा ।

चोलं नीलनिचोलकर्षणविधौ चूडामणिं चुम्बने
याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः काञ्चनीम् ।
इत्थं चन्दनचर्चितैर्मृगमदैरङ्गानि संस्कुर्वती
तत्किं यन्न मनोरथं वितनुते वारेषु वाराङ्गना ॥६९॥

प्रभा यत्र क्रियायाम् । तथा प्रियाऽऽगमनसम्भावनासन्तोषेण मुखस्याऽतिप्रसन्नतयेति भावः । तल्पाऽन्तिके शयनप्रान्ते क्वापि क्वापि प्रदेशे प्रियधिया जाराऽऽगमनसम्भावनया कराम्बुजं करकमलम् । अम्बुजपदं प्रियस्मृतिजन्यखेदवत्तां ध्वनयति न्यस्यति । शनैः स्थापयतीत्यर्थः । अत्र रूपकालङ्कारः । स चाऽपह्नुत्यनुप्राणितः । शार्दूलविक्रीडितं वृत्तम् ॥ ६८ ॥

सामान्यवनितां वासकसज्जामुदाहरति चोलमिति । काचित्कां चित्प्रत्याह । नीलनिचोलकर्षणविधौ नीलवर्णो यो निचोलः उपरितनशाटकः । निचोलः प्रच्छदपट इत्यमरः । तस्य कर्षणविधौ आकर्षणविधौ चोलम् । चोलः कूर्पासको ऽस्त्रियामित्यमरः । कुचयोः स्तनयोः याचिष्ये प्रार्थयिष्ये । इदमग्रेप्यन्वेति । नीलपदं घनाऽन्धकारगमनयोग्यतां ध्वनयति । गौराङ्गीत्वं वा । विधिपदमाकर्षणे ऽवश्यकर्तव्यतां द्योतयति ।

निचोल उपरितनपटः । नीलत्वेन घनाऽन्धकारगमनयोग्यता गौराङ्गीत्वं वा । इत्थं पूर्वोक्तरत्नवासनया वारेषु कान्तागमननिश्चयोपरसमयेषु यत् वस्तु मनोरथम् अभिलाषविषयम् । यद्वा मनोरथमभिलाषं वा यत् यदर्थमित्यर्थः । न वितनुते न करोति तत्किं न किमपीत्यर्थः । एवं च वेश्याऽभिलाषविषयानाति भावः ॥ ६९ ॥

सदासाऽऽकूताज्ञाकरप्रियतमा स्वाधीनपतिका। निरन्तराऽऽज्ञाकरप्रियत्वमित्यर्थः। अस्याश्चेष्टा वनविहारादिमदनमहोत्सवमदाऽहङ्कारमनोरथाऽऽवाप्तिप्रभृतयः। मदो हर्षोत्कर्षः।

किं च चुम्बने चुम्बनसमये चूडामणिं केशपाशभूषारत्नं पुनः किं चेत्यर्थः। कुचयोः स्तनयोः कराऽर्पणविधौ कराऽर्पणसमये काञ्चनीं सुवर्णनिर्मितां काञ्चीं मेखलाम्। अर्पणपदं मर्दनाऽवसरे ऽप्यचलतया इच्छावत्त्वं ध्वनयति। पूर्वं विधिपदोपादानादत्रापि तस्यैवोपादानमयुक्तमिवाऽऽभाति। इत्थं पूर्वोक्तविधया चन्दनचर्चितैः श्रीखण्डमिश्रितैर्मृगमदैः कस्तूरिकाभिः। मृगनाभिर्मृगमदः कस्तूरी चाऽथ कोलकमित्यमरः। अङ्गानि अवयवान्। अङ्गं प्रतीको ऽवयव इत्यमरः। संस्कुर्वती अधिवासयन्ती वाराङ्गना वेश्या वारेषु कान्तागमननिश्चयोत्तरसमयेषु यद्वस्तु मनोरथाऽभिलाषविषयं यद्वा मनोरथमभिलाषं वा यत् यदर्थमित्यर्थः। तत् वितनुते करोति यत्तत्किं न किमपीत्यर्थः। एवं च वेश्याऽभिलाषविषयं सर्वमिति भावः। शार्दूलविक्रीडित वृत्तम्॥ ६९॥

क्रमप्राप्तां स्वाधीनपतिकां लक्षयति सदेति। निरन्तरा-

सदासाकूतेति। निरन्तराऽऽज्ञाकरप्रियत्वमित्यर्थः। वनेति। मदः हर्षोत्कर्षः। अहङ्कारः आत्मनि तत्साधकत्वधीः।

मुग्धा स्वाधीनपतिका यथा ।

मध्ये न कृशिमा स्तने न गरिमा देहे न वा कान्तिमा
श्रोणौ न प्रथिमा गतौ न जडिमा नेत्रे न वा वक्रिमा।
लास्ये न द्रढिमा न वाचि पटिमा हास्ये न वा स्फीतिमा
प्राणेशस्य तथापि मज्जति मनो मय्येव किं कारणम् ॥७०॥

ऽऽज्ञाकरप्रियत्वमित्यर्थः। लक्षणज्ञानाय चेष्टामाह वनेति। मदो हर्षोत्कर्षः। अहङ्कार आत्मनि तत्साधकत्वधीः।

मुग्धां स्वाधीनपतिकामुदाहरति मध्येति। कापि सखीमाह हे सखि मध्ये कटौ कृशिमा कृशत्वं नववयःसन्धिमत्तया ऽपचयोपचयाभावान्न कृशत्वं स्फुटमिति भावः। किं च स्तने कुचे गरिमा गुरुत्वं न, पूर्वोऽभिप्रायः। देहे शरीरे कान्तिमा लावण्याऽतिशयः सम्यक्तारुण्याऽभावात्। किं च श्रोणौ नितम्बे प्रथिमा पृथुत्वं न। किं च गतौ गमने जडिमा जडत्वं न किं च नेत्रे नयने वक्रिमा तिर्यगवलोकनं न। ननु सपूर्णतारुण्याभावेपि कलाकौशलवत्त्वादेवाऽऽसक्तिरत आह लास्ये तौर्यत्रिके लास्ये

मध्ये नेति। कृशिमेति वयःसन्धिमत्तया ऽवयवपुष्ट्यभावात् कृशत्वमस्फुटत्वमिति भावः। कान्तिमेति। सम्पूर्णतारुण्याऽनुदयादिति भावः। लास्ये नृत्ये द्रढिमा अभ्यासविशेषः। यद्वा विलासे चमत्कारविशेषे इत्यर्थः। पटिमा श्लिष्टत्वादिकम्। स्फीतिमा प्रागल्भ्यम्। तेन मुग्धत्वादेवेति भावः। मज्जति लीनं भवति। तेन बहिर्गमनाऽभावो द्योत्यते। अत्र कान्तिमास्फीतिमावक्रिमेत्यत्रेमनिश्चिन्त्यः। सम्पूर्णनाऽहङ्कारो द्योत्यते ॥ ७० ॥

मध्या स्वाधीनपतिका यथा।

यदपि रतिमहोत्सवे नकारो
यदपि करेण च नीविधारणानि।
प्रियसखि पतिरेष पार्श्वदेशं
तदपि न मुञ्चति तत् किमाचरामि॥ ७१॥

तौर्यत्रिकं नाट्यमिति मिश्रः। द्रढिमा दृढत्वम् अभ्यासविशेष इति यावत्। यद्वा विलासे द्रढिमा चमत्कारविशेषो न। किं च वाचि वचने पटिमा पटुत्वं स्पष्टत्वादिकमिति यावत्। किं च हास्ये हसिते स्फीतिमा प्रागल्भ्यं न मुग्धत्वादिति भावः। यद्यपि तथापि प्राणेशस्य प्रियतमस्य मय्येव नाऽन्यत्र मनश्चित्तं पज्जति लीनं भवति। एवं च बहिर्गमनाऽभावो द्योत्यते। अत्र किं कारणं तन्न जाने। एवं चाऽहङ्कारो द्योत्यते। अत्र कान्तिमा वक्रिमा स्फीतिमा इत्यत्र इमनिच् चिन्त्यः। विभावनालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ७०॥

मध्यां स्वाधीनपतिकामुदाहरति यदपीति। कापि सखीं वक्ति हे प्रियसखि। यदपि यद्यपि रतिमहोत्सवे सम्भोगोत्कटोत्सवसमये नकारो निषेधः क्रियते। उत्सवपदं निषेधाऽयोग्यतां ध्वनयति। यद्यपि करेण हस्तेन नीविधारणानि वस्त्रग्रन्थिपतनष्टम्भाः। बहुवचनं बलादप्यनिवार्यतां द्योतयति। क्रियन्ते तदपि तथापि एष पतिः प्रियः पार्श्वदेशम् अङ्गलग्नतां चेद्यदि न मुञ्चति तर्हि किं करोमि तत्कथयेति भावः। एवं

यदपीति। उत्सवत्वेन निषेधाऽयोग्यता अनेन मदनषरवं ध्वन्यते॥ ७१॥

प्रौढा स्वाधीनपतिका यथा ।

वक्त्रस्याऽधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा
धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम् ।
स्वप्नेनापि न गच्छति श्रुतिपथं चेतःपथं दृक्पथं
काप्यन्या दयितस्य मे सखि कथं तस्याऽस्तु भेदग्रहः ७२

चाऽहङ्कारो द्योत्यते । मध्यात्वं च स्फुटमेव । परित्यागहेतुभूतनिषेधादिकथनेपि परित्यागाऽकथनाद्विशेषोक्तिरलङ्कारः । पुष्पिताग्रावृत्तम् ॥ ७२ ॥

प्रौढां स्वाधीनपतिकामुदाहरति वक्त्रस्येति । का चित्कथमन्यनायिकाकान्तस्तदीयस्तव विदधाति न त्वदीयः प्रियस्तव स्तवं करोतीति वादिनीं सखीं प्रत्याह हेसखि कान्तः । अर्थात् अन्याङ्गनानामपि प्रियः । वक्त्रस्य वदनस्य अधरपल्लवस्य अधरोष्ठकिसलयस्य । पल्लवपद कोमलतामरुणतां च व्यञ्जयति । वचसो वचनस्य हास्यस्य हसितस्य लास्यस्य तौर्यत्रिकस्य नृत्यस्य । वाशब्दो विकल्पार्थः समुच्चयार्थो वा । धन्यानां प्रियेण स्वतः स्तुतिकरणादिति भावः । अरविन्द-

वक्त्रस्येति । वाशब्दः समुच्चये । लास्यं तौर्यत्रिकं नृत्यं वा । कान्तः न तु प्रिय । कान्तेन स्तुतिकरणादापाततस्तस्या धन्यत्वम् । मे दयितस्य तु अन्या कापि नायिका स्वप्नेनापि स्वप्नावस्थायामपि श्रवणमार्गं दृष्टिगोचरमन्तःकरणपद्धतिं वा नाऽऽगच्छति । तादृशस्य मत्प्रियस्य भेदग्रहो विशेषग्रह. अर्थादितरनायिकाभ्यस्तस्य स्तुतौ हेतुत्वात् तं विना कथं स्तुतिः स्यादिति भावः । स्तुतेः सप्रतियोगिकत्वादिति तात्पर्यम् । एवं चाऽन्याङ्गनानायिकानामितरनायिकादर्शनादिसत्त्वात् तास्वधन्यात्वं स्वस्मिन् धन्यात्वं व्यज्यते ॥ ७२ ॥

परकीया स्वाधीनपतिका यथा।

स्वीयाः सन्ति गृहे गृहे मृगदृशो यासां विलासक्वण-
त्काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति।

सुन्दरदृशां कमलाऽभिरामनयनानां स्तुतिं स्तवं तनोति वि-
स्तारयति। एवं च विरहसद्भावोऽपि द्योत्यते। प्रियस्य दयितस्य
काप्यन्या कामिनी स्वप्नेनापि स्वप्नावस्थायां किमुत जाग्रद्द-
शायामिति भावः। दृक्पथं दृष्टिपथम्। श्रुतिपथं श्रवणमार्गम्।
चेतःपथमन्तःकरणपद्धतिम्। न गच्छति न प्राप्नोति। दृगा-
दिविषयो न भवतीत्यर्थः। तस्मात्तस्य मत्प्रियस्य भेदग्रहः।
अर्थादितरनायकेभ्यो भिन्ना बुद्धिः। एतस्यापि स्तुतौ भेद-
त्वात् कथमस्तु न कथमपीत्यर्थः। स्तुतेः सप्रतियोगितया
ऽन्यकामिनीदर्शनादिकमपेक्षितं तदभावाच्च कथं स्तुतिः
स्यादिति भावः। एवं चाऽन्याङ्गनापतीनामन्याङ्गनादर्शना-
दिसत्त्वात् स्तुतिसम्भवात् तास्त्वधन्यात्वं स्वस्मिंश्च धन्यतमात्वं
व्यज्यते। यद्वा क्वापि प्रियतमे कोपादिकं विधेयमित्युपदेश-
कारिणीं सखीं प्रति वक्ति हे सखि यासामरविन्दसुन्दरदृशां
वक्त्रादीनां कान्तः स्तुतिं तनोति तास्तु धन्याः। मे दयितस्य
अन्या कापि स्वप्नेनापि दृगादिविषया न। एवं च कोपोत्तरं
तेन स्तुत्यादिना प्रसादीकरणं कर्तुं शक्यम्। एवं च तत्सम्ब-
न्धी तद्विषयक इति यावत्। भेदग्रहः भिद्यते हृदयमनेनेति
भेदः कोप इत्यर्थः। तस्य ग्रहो ग्रहणम् अङ्गीकारः कथमस्तु
नोचित इति भावः। एवं च यः कोपोत्तरं स्तुत्यादिप्रसाद-

स्वीया इति। विलासहेतुकशब्दयुतमेखलाकर्णभूषणादिशब्दो
न विश्राम्यति यासां ताः स्वीयाः गृहे सन्त्येव। तेनायासाभावो

को हेतुः सखि कानने पुरपथे सौधे सखीसन्निधौ
भ्राम्यन्ती मम वल्लभस्य परितो दृष्टिर्न मां मुञ्चति॥७३॥

नमपि कर्तुं न जानाति तादृशे सरले मन्दे किं चित्तु नोचितं कोपकरणमिति व्यज्यते । अत्राऽर्थापत्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ७२ ॥

परकीयां स्वाधीनपतिकामुदाहरति स्वीया इति । कापि सखी वक्ति हे सखि यद्यपि ताः स्वीयाः यासां विलासक्वणत्काञ्चीकुण्डलहेमकङ्कणझणत्कारः । विलासेन हस्तादिचेष्टाविशेषेण क्वणन्ती सशब्दा नीवी कटिमेखला कुण्डलं कर्णभूषणं हेमकङ्कणं सुवर्णवाहुवलयं तेषां झणत्कारः शब्दविशेषः न विश्राम्यति । विरतिं न याति । ताः सरोरुहदृशः कमलनयनाः गृहे गृहे स्वसदने गृहपद्मायासाऽभावमवगमयति। सन्ति विद्यन्ते । तथापि कानने विपिने । एवं च भयजनकेपि विपिने भयाऽप्राप्त्या आसक्तिविशेषो ध्वन्यते । तथा पुरपथे नगरमार्गे । एवं च वहुतरजनाऽऽकीर्णतयोचिता लज्जा तत्परित्यागात् आसक्त्यतिशय एव द्योत्यते। तथा सौधे उच्चसदने। एवं चोच्चैस्तयाऽविषमदेशाद्यारोहणेन साहसकारिता व्यज्यते।

ध्वन्यते । तथापि कानने भयजनकेपि पुरपथे जनावकीर्णेपि । एतेन भयलज्जयोस्त्यागादासक्त्यतिशयो ध्वन्यते । सौधे उच्चसदनेपि सखीसमक्षमपि । अनेनापि तदेव । अनेन समीपतरवर्त्तिसखीसन्निधाववलोकनमुचितमनुचितं वेति विवेकवैधुर्यादुन्मादो व्यज्यते इति केचित् । भ्राम्यन्तीति । मां परितो भ्राम्यन्ती मम प्रियस्य दृष्टिर्मां न मुञ्चतीत्यन्वयः । तेन चैकत्र विश्रान्त्यभावादुन्माद एव व्यज्यते । भ्राम्यन्त्या ममेत्यपि पाठः । व्यङ्ग्यं तुल्यम् ॥ ७३ ॥

स्वाधीनपतिका सामान्यवनिता यथा ।

सन्त्येव प्रतिमन्दिरं युवतयो यासां सुधासागर-
स्रोतःस्यूतसरोजसुन्दरचमत्कारा दृशो विभ्रमाः ।

तथा च स एव तथा सखीसन्निधौ सखीसविधे । एवं च समीपतरवर्तिसखीनिवहसमक्षविलोकनमुचितमेवेति विवेकवैधुर्यं ध्वन्यते तेन चोन्मादस्तेन च स एव । मां परितः समन्तात् भ्राम्यन्ती । एवं चैकत्राऽनवस्थितिस्तया विश्रान्त्यभावस्तेन च स एव व्यज्यते । मम वल्लभस्य प्रियस्य दृष्टिः । एकवचनमेकरूपतां व्यनक्ति । न मुञ्चति अर्थान्मामित्यर्थः । अत्र को हेतुः किं कारणम् । अत्र स्वीयाऽपेक्षया स्वस्मिन्नाधिक्यप्रदर्शनेन तथा स्वीयासु तथाविधगुणरूपकारणसत्त्वेऽपि वल्लभदृग्भ्रमणरूपकार्याऽकथनेन तथात्मनि स्वीयागुणाऽतिरिक्तगुणाऽज्ञाननिरूपणेन प्रियदृग्भ्रमणरूपकार्योत्पत्तिकथनेन हेत्वनिर्णयेन व्यतिरेकविशेषोक्त्या स्फुटविभावनासंशयालङ्काराणां समुच्चयः । शार्दूलविक्रीडितं वृत्तम् ॥ ७३ ॥

सामान्यवनितां स्वाधीनपतिकामुदाहरति सन्त्येवेति । सामान्यवनिता सखीं वक्ति । हे सखि यासां स्वीयानां परकीयानां वा सुधासागरस्रोतःस्यूतसरोजसुन्दरचमत्काराः । सुधायाः अमृतस्य सागरः सरित्पतिः तस्य स्रोतसि प्रवाहे

सन्त्येवेति । यासां स्वीयानां परकीयानाञ्च दृग्विलासाः सुधासङ्गमसमुद्रदेशावच्छिन्ननदीप्रवाहलग्नकमलवत्सुन्दरा रमणीयाश्चमत्कारा येषां तादृशाः विचित्रनानाविधोत्कर्षशालिन्यो मन्मथकलावैशद्यस्य कारणस्य स्वयमुपन्यस्तत्वात्किं कारणमित्यसङ्गतमित्यपास्तम् । तादृशप्रवाहलग्नत्वेन चञ्चलताऽऽह्लादकत्वे । एतेन सागरस्य स्वतोऽम्बुसरणरूपस्रोतोऽसम्भवात् स्रोतःपदं चिन्त्यमित्यपा-

चित्रं किं तु विचित्रमन्मथकलावैशद्यहेतोः पुन-
र्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम्॥७४॥

स्यूतं लग्नम्। एवं च पत्याह्लादकत्वं व्यज्यते। स्रोतोम्बुसरणं स्वत इत्यमरः। अत्र स्वतोऽम्बुसरणरूपार्थस्य सागरे ऽसम्भवादसमञ्जसमिवाऽऽभाति। यत्सरोजं कमलं तद्वत्सुन्दराः रमणीयाः चमत्कारा येषां ते एतादृशाः दृशो विभ्रमाः दृष्टेः कटाक्षादयः। विचित्रमन्मथकलावैशद्यहेतोः। विचित्रा नानाविधोत्कर्षशालिन्यः मन्मथकलाः रतिकेलिकलास्तासां वैशद्यं प्राकट्यं तद्रूपकार्यार्थमेवेति। एवं च यासां दृग्विलाससमयमेव नानाविधकेलिकलाः परिस्फुरन्ति किमु वाच्य तासामङ्गसङ्ग इति भावः। एतादृश्यो मृगदृशो हरिणनयनाः प्रतिमन्दिर मन्दिरे मन्दिरे। वीप्सायामव्ययीभावः। सन्त्येव। एवकारेण सौलभ्यं द्योत्यते। किं तु इदं चित्रमद्भुतमाश्चर्यम्। यच्चित्तहर मनःस्वाधीनताकारि। एवं च शरीरस्वाधीनताकरणमतिसुकरमिति व्यज्यते। वित्तं वसु पुनः एकदा तु दत्तमेवेति भावः। युवा तरुणः। युवपदं सकलनायिकास्पृहणीयतां ध्वनति। मयि प्रयच्छत्येव ददात्येव। एवकारेण निवा-

स्तम्। यद्यपि सन्ति किं तु तथापि युवचित्तहरं चित्तं यदि ददात्येवेदं चित्रम्। चित्तहरमित्यनेन शरीरस्वाधीनताकरणमतिसुकरमिति व्यज्यते। युवत्वेन सकलरमणीस्पृहणीयत्वम्। ददात्येवेत्येवकारेण निवारणकरणेऽपि न वैरस्यमावहतीति ध्वन्यते। एवञ्च विनापि द्रव्यदानं सुलभतरवह्वङ्गनासत्त्वेपि विशिष्टतरद्रव्यदानेनापि मद्रजने किं कारणं तन्न जाने इत्यर्थः। यत्तु मय्येवेति व्याचख्युः तन्न। स्वीयापरकीययोर्द्रव्यदानाऽप्रसक्तेः। वेश्यान्तरस्यापि लक्ष्यत्वाच्च॥७४॥

स्वयमभिसरति प्रियमभिसारयति वा या सा ऽभिसारिका। अस्याश्चेष्टा। समयाऽनुरूपवेषभूषणशङ्काप्रज्ञानैपुण्यकपटसाहसादय इति परकीयायाः। स्वीयायास्तु प्रकृत एव क्रमः। अलक्ष्यतासम्पादकस्य श्वेताद्याभरणस्य स्वीयाऽभिसारिकायामसम्भवात्।

रणाकरणोपि नैव वदान्यतामावहतीति ध्वन्यते। एवं च विना द्रव्यदानं सुलभा एवाऽङ्गनास्तथापि ताः सन्त्यज्य द्रव्यदानादिनापि मामेव भजते इत्यहो किमत्र बीजमिति न जाने। अत्र किं कारणं तन्न जाने इत्यर्थः। केचित्तु मय्येव मध्यास्थितमेवेति व्याचख्युस्तन्न। स्वीयापरकीयानां द्रव्यदानाऽप्रसक्त्या ऽव्यावर्तकत्वाद् व्यर्थत्वापत्तेः। न च वेश्यान्तर व्यावर्त्यमिति वाच्यम्। तस्यापि इह लक्ष्यत्वात्। एवं च द्रव्यदानकारणस्य मन्मथकलावैशद्यस्य स्वयमुपन्यस्तत्वात् तत्कारणप्रश्नस्याऽनौचित्यमिति दूषणमपास्तम्। अलङ्कारः पूर्ववदुन्नेयः। शार्दूलविक्रीडितं वृत्तम्॥ ७४॥

क्रमप्राप्तामभिसारिकां लक्षयति स्वयमिति। अभिसरणाऽभिसारणाऽन्यतरवत्त्वमित्यर्थः। उक्तं च 'या कान्ता ऽभिसरेत्कान्तं सारयेद्वा ऽभिसारिके'ति। अस्याश्चेष्टामाह समयानुरूपं श्वेतनीलादि। स्वीयापरकीययोरभिसारव्यापारस्तुल्य एवेत्याह दूतीसादि। इति पूर्वोक्तप्रकारेण। तुकारश्चार्थे। प्रकृत एवमन्य इत्यर्थः। क्रमः अभिसारव्या-

स्वयमिति। अभिसरणाऽभिसारणाऽन्यतरवत्त्वमित्यर्थः। समयाऽनुरूपेति। श्वेतनीलादि। प्रकृत एव क्रम इति। भर्तुः शुश्रूषादिरूप एव न तु समयाऽनुरूपवेशधारणादिः। अलक्ष्यतासम्पाद-

मुग्धा ऽभिसारिका यथा ।

दूती विद्युदुपागता सहचरी रात्रिः सहस्थायिनी
दैवज्ञो दिशति स्वनेन जलदः प्रस्थानवेलां शुभाम् ।

पारः । तथैव दर्शनादिति भाव इति केचित् । वस्तुतस्तु यथाश्रुतमेव साधु । अलक्ष्यतासम्पादकस्य श्वेताद्याभरणग्रहणस्य स्वीयाऽभिसारिकया अप्येतद्भेदोदाहरणपद्ये इतरव्यावर्तके बलवद्दोषाऽऽपादनाऽनुपपत्तेः । अत एव परकीयामभिसारिकामभिधाय ज्योत्स्नाभिसारिकेत्यादिभेदत्रयं तस्या एवाऽभ्यधायि । अन्यथा ध्वान्ताभिसारिकोदाहरणसमये पद्ये स्वैरिणीति पदोपादानाऽसङ्गतेः । न च दिवाऽभिसारिकोदाहरणपद्ये शुद्धान्तपदोपादानात् स्वीयाऽभिसारिकायामप्येते भेदा इति वाच्यम् । शुद्धान्ते जारेणापि सह सङ्गतेः सम्भवात् । ज्योत्स्नाभिसारिकेत्यादौ मात्रपदमवश्यं पूरणीयम् । अन्यथा ध्वान्ताभिसारिकोदाहरणपद्ये इतरव्यावर्तककेवलपदोपादानाऽनुपपत्तेः । प्रकृत एव क्रमः भर्त्तुः शुश्रूषादिरूपः ।

कस्य श्वेताद्याभरणग्रहणस्य च स्वीयाऽभिसारिकायामसम्भवात् । अत एव परकीयाऽभिसारिकामभिधाय ज्योत्स्नाभिसारिकेत्यादिभेदत्रयं तस्या एव कथमिच्छति ग्रन्थकृत् । न च दिवाभिसारिकोदाहरणे शुद्धान्तपदोपादानात् स्वीयाऽभिसारिकाया अप्येते भेदा इति वाच्यम् । शुद्धान्ते जारेणापि सह सङ्गतेः सम्भवादिति भावः । वस्तुतस्तु तस्या अपि गुरुजनप्रतिबन्धादिना स्थानाऽभावात् गेहे रत्यभावेनादौ सङ्केतकरणेन लज्जावशादात्मगोपनाय तथाविधवेषादिकं युक्तमेव चमत्कारि चेति वयं प्रतीमः ।

दूतीति । आकारिकेत्यर्थः । विद्युत्पदेन क्षणाऽवस्थायित्वं तच्च शीघ्रगमनार्हतां ध्वनयति । ननु चपलया सह कथं गन्तव्यमत आह सहचरी सहस्थायिनी सखी रात्रिः तथा तयैव सह गन्तव्यमिति भावः । ननु सहायत्वे शुभसमयाऽभाव इत्यत आह दैवज्ञेति । ज्योतिर्विदित्यर्थः । एवं च तदाज्ञोल्लङ्घनं न विधेयमिति भावः ।

वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवै-
र्जातो ऽयं दयिताऽभिसारसमयो मुग्धे विमुञ्च त्रपाम्॥७५॥

मुग्धामभिसारिकामुदाहरन्ति। दूतीति। का चिन्नायिकां वक्ति हे मुग्धे विद्युत् तडिदेव दूती आकारिकेति भावः। विद्युत्पदं क्षणाधवस्थायित्वं तच्च शीघ्रगमनाऽर्हतां ध्वनयति। उपगता प्राप्ता। नन्वेतस्याश्चापल्यशालित्वं कथमनया सह गन्तव्यमत आह। रात्रिर्निशैव सहचरी सखी सहस्थायिनी सह तिष्ठति। तथा चाऽनयैव सह गन्तव्यमिति भावः। ननु सहचरीसत्त्वेऽपि शुभसमयाऽभावे कथं गन्तव्यमत आह जलदो मेघ एव दैवज्ञः दैवं भाग्यं जानाति ज्योतिर्विदित्यर्थः। एवं चैतदाज्ञोल्लङ्घनं न विधेयमिति ध्वन्यते। स्तनेन शब्देन वेलां प्रस्थानवेलां गमनसमयं शुभां समीचीनां दिशति कथयति। एवं चाऽयमेवाऽवसरः शुभ इत्यभिधीयते। अतो ऽमुना घनेन झटिति प्रस्थातव्यमिति व्यज्यते। किं च तिमिरस्तोमोऽपि ध्वान्तनिकरोऽपि। स्तोमौघनिकरव्रातेत्यमरः। झिल्लीरवैः चीरिकाशब्दैः। भृङ्गारी चीरिका चीरी झिल्लिकेत्यमरः। माङ्गलिकीं मङ्गलप्रयोजिकां वाचं तनोति विस्तारयति। एवं चाऽनेन तिमिरमपि मङ्गलवचनं वक्ति किमुत चेतनः सखीनिवह इति

ननु तत्सत्त्वेपि शकुनाऽभाव इत्यत आह वाचमिति। झिल्लीरवैः चीरीति प्रसिद्धजन्तुशब्दैः। माङ्गलिकीं मङ्गलप्रयोजिकाम्। एवं चाऽचेतनतिमिरस्तोमोऽपि मङ्गलं वक्तीति किमुत सखीजन इति वाच्यमिति भावः। अतः प्रियमभि निकटगमनावसरो जात इति विशेषः। ननु लज्जावशाद्गन्तुमशक्यमत आह विमुञ्चेति। अभिलषितप्रतिबन्धिकां त्रपां सर्वात्मना त्यक्त्वा ईदृशे समये प्रियाभिसार उचित इति भावः॥७५॥

मध्या ऽभिसारिका यथा ।

भीता ऽसि नैव भुजगात्पथि मद्भुजस्य
सङ्गे पुनः किमपि कम्पमुरीकरोषि ।

व्यज्यते । अतः अयमासन्नः दयिताऽभिसारसमयः प्रियतमसमीपगमनाऽवसरः जातः । ननु लज्जारूपप्रतिबन्धकवशात्कथं गन्तव्यमत आह त्रपां लज्जाम् अभिलषितप्रतिबन्धिकां विमुञ्च सर्वात्मना त्यज । लज्जात्यागेनैतादृग्यात्रोचितसमये प्रियमभिसरेति भावः । अन्यस्यापि गन्तुमुद्युक्तस्य मुहूर्तादि कथ्यतइति लौकिकम् । अत्र लुप्तोत्प्रेक्षालङ्कारः । शार्दूलविक्रीतं वृत्तम् ॥ ७८ ॥

मध्यामभिसारिकामुदाहरति भीता ऽसीति । नायको नायिकां वक्ति हे तन्वि । एवं च भारदहनाऽक्षमत्व तेन च कम्पाद्यङ्गीकाराऽनौचित्यं ध्वन्यते । पथि मार्गे भुजङ्गात्सर्पात् पदस्पृष्टादिति भावः । नैव भीतासि भयं नैव प्राप्तासि । यद्वा भीतैव नासि । एवं च तत्कार्यकम्पादि दूरापास्तमिति द्योत्यते । पथिपद विस्पष्टदर्शनाऽयोग्यतां ध्वनयति । भुजङ्गपदमवश्यपरिहरणीयत्वं भयजनकत्वं वा व्यञ्जयति । मद्भुजस्याऽपरिहरणीयस्याऽभयजनकस्य वेति भावः । किंसङ्गे ईषत्सङ्गे एव च गाढालिङ्गने किं करिष्यसीति न जाने इति व्यज्यते । कम्प वेपथुम् । उरीकरोषि अङ्गीकरोषि । सात्त्विकभावोदया-

भीतासीति । भुजगात् पदस्पृष्टात्सर्पान्नैव भीतासि । एवं च तत्कार्यकम्पादि दूरापास्तमिति ध्वन्यते । भुजङ्गपदेनाऽवश्यपरिहरणीयत्व भयजनकत्वं व्यङ्ग्यम् । मद्भुजस्याऽपरिहरणीयस्य भयाऽजनकस्य किमपीषत्सङ्गे कम्पं स्वीकुरुषे गाढालिङ्गने किं करिष्यसीति न जाने इति व्यज्यते । अम्भोधरध्वनिभिर्यद्वा भिर्भयङ्करैरिति भाव. ।

अम्भोधरध्वनिभिरक्षुभितासि तन्वि
मद्वाचि साचिवदनासि किमाचरामि ॥ ७६ ॥

प्रगल्भा ऽभिसारिका यथा।

स्फुरदुरसिजभारभङ्गुराऽङ्गी
किसलयकोमलकान्तिना पदेन।
अथ कथय कथं सहेत गन्तुं
यदि न निशासु मनोरथो रथः स्यात् ॥ ७७ ॥

र्विति भावः। किं च अम्भोधरध्वनिभिः। सजलजलदनिनदैः बहुभिर्भयङ्करैरिति भावः। अक्षुभिता ऽसि साध्वसं न प्राप्तासि। अत्र न क्षुभिता ऽसीति युक्तम्। मद्वचने एकस्मिन् भयाऽजनके साचिवदनासि तिर्यङ्नमितवदना ऽसि लज्जयेति भावः। किमाचरामि किं करोमि। तथा चाऽत्र दैवमेव शरणमिति भावः। वसन्ततिलकावृत्तम् ॥ ७६ ॥

प्रौढामभिसारिकामुदाहरति स्फुरदिति। कापि सखी मद्वचनादियमागता न स्वाऽभिलाषेणेति वादिनं नायकं प्रत्याह। अथेति प्रश्ने। यदि मनोरथः अभिलापः स एव रथः स्यन्दनः गमनसाधनम् इ-

अक्षुभितासि क्षोभं साध्वसं न प्राप्तासि। अत्र न क्षुभितासीति युक्तम्। मद्वचसि एकस्मिन् भयाऽजनके च साचिवदना तिर्यक् नमितवदना लज्जयेति भावः। किमाचरामि तथा चाऽत्र दैवमेव शरणमिति भावः। समानलज्जामदनत्वं फुटम् ॥ ७६ ॥

स्फुरदिति। अथेति प्रश्ने। यदि मनोरथः अभिलाष एव स्यन्दनो रथः न स्याद्गमनसाधनमित्यर्थः। मनोरथपदमत्यन्तद्रुतगामितामावेदयति। स यदि न स्यात् स्फुरदुरसिजभारभङ्गशीलाङ्गी पल्लवभृद्दलिशोभाशालिना पदेन निशासु उच्चावचप्रदेशज्ञानवैधुर्यकरासु कथं गन्तुं सहेत अत्रोरसिजपदेन दुर्वहता भङ्गुराङ्गीत्यनेन गत्ययोगता निशापदेन बहुक्लेशेनागमनम् बहुवचनेन यदि सख्यादिनिर्बन्धेनैवाऽऽगता स्यात्तर्हि कदा चिदेव न बहुवारं तस्मादभिलाषेणैवाऽऽगतासीति ध्वन्यते ॥ ७७ ॥

परकीया ऽभिसारिका यथा।

रभसादभिसर्तुमुद्यतानां
वनितानां सखि वारिदो विवस्वान्।
रजनी दिवसो ऽन्धकारमर्चि-
र्विपिनं वेश्म विमार्ग एव मार्गः॥ ७८॥

त्यर्थः। न स्याद्भवेत्तर्हि स्फुरदुरसिजभारभङ्गुराङ्गी स्फुरन्तौ विलसन्तौ यावुरसिजौ स्तनौ तयोर्भारेण भङ्गुराङ्गी नायिका। उरसिजपदं दुर्वलतां व्यञ्जयति। भङ्गुराङ्गीपदेन गत्यक्षमता ध्वन्यते। किसलयकोमलकान्तिना पल्लवमृदुलशोभाशालिना। अत्र कान्तिपदमधिकमिवाऽऽभाति। पदेन चरणेन निशासु रात्रिषु। एतेनोच्चावचप्रदेशज्ञानवैधुर्यं तत्र वहुक्लेशागमनवत्त्वं ध्वनयति। वहुवचनेन च यदीयं भवन्निर्वन्धमात्रादेवाऽऽगता स्यात्तर्हि कदा चिदेव न वहुवारम्। तस्मादभिलाषेणैवाऽऽगतेति व्यज्यते। कथं केनोपायेन गन्तुं भवत्सन्निधिं प्राप्तुं सहेत समर्था भवेदित्यर्थः। एवं च केवलं स्वाऽभिलाषवलेनैवेयमागतेति द्योत्यते। पुष्पिताग्रावृत्तम्॥७७॥

परकीयामभिसारिकामुदाहरति रभसादिति। कापि कथमेतादृशाऽवसरे ऽभिसर्तुमुचितमिति वादिनीं सखीं प्रत्याह हे सखि रभसात् प्रियदर्शनौत्कण्ठ्यात् अभिसर्तुं प्रियं प्रति गन्तुम् उद्यतानां कृतोद्योगानां वनितानाम् अनुरागविशे-

रभसादिति। विमार्गइति। तत्र लोचनाऽविषयमार्ग एव मार्गः रभसात् प्रियदर्शनौत्कण्ठ्ययोगतः वनितानाम् अनुरागविशेषं नायिकानां विवस्वान् प्रकाशकः। एवं चाऽन्यगमनाऽयोग्यसमयादिकमेवाऽस्माकं गमनादियोग्यमिति ध्वन्यते॥ ७८॥

ज्योत्स्नाऽभिसारिका यथा ।

चन्द्रोदये चन्दनमङ्गकेषु
विहस्य विन्यस्य विनिर्गतायाः ।

षवतीनां नायिकानाम् । वनिता जनिताऽत्यर्थाऽनुरागायां च योषितीत्यमरः । वारिदो जलदः । बहुलपङ्कसम्पादकः स एव विवस्वान् भास्वान् । पङ्किलमार्गशुष्कतासम्पादनाज्जनिताऽत्यर्थाऽनुराग इति भावः । एवं चा ऽन्यजनसञ्चाराऽयोग्यएव पथ्यस्मद्गमनमुचितमिति व्यज्यते । रजनी रात्रिः जनगमनयोग्यताशून्या सैव दिवसो वासरः गमनयोग्यः । एवमन्यगमनाऽयोग्यसमय एवाऽस्माकं गमनयोग्य इति ध्वन्यते । किं च अन्धकारः ध्वान्तं मार्गदर्शनप्रतिबन्धकं तदेवार्चिस्तेजः मार्गदर्शकमिति भावः । एवं चाऽन्यजनमार्गदर्शनप्रतिबन्धकमेवाऽस्माकमनुगुणमिति व्यज्यते । ननु पङ्किलेऽपि पथि बहुलाऽन्धकारात्तत्रापि कैश्चिद् ज्ञायतएवाऽत आह किं च विमार्ग एव अपथमेव सर्वदा ऽन्यजनाऽपरिचित इति भावः । मार्गः सरणिः । अस्मत्परिचित इति भावः । एवं चाऽन्यजनलोचनाऽविषयमार्ग एवाऽस्माकमुचित इति द्योत्यते । ननु तत्र सदनाऽभावात्कथं क्रीडेत्यत आह विपिनं वनम् । अन्यसञ्चारलेशशून्यं तदेव वेश्म गृहम् । एवं च क्रीडास्थानं विपिनमेवाऽस्माकमत्यन्तोचितमिति व्यज्यते । मालभारिणीयोवृत्तम् ॥ ७८ ॥

चन्द्रेति । अङ्गकेषु चन्दनं विन्यस्य विहस्य सुधादीधितिसमतया हासस्य तत्प्रभाव्याप्ताया अत्यन्ताऽलक्ष्यत्वसम्पादनाय हासः । विनिर्गतायाः प्रियं प्रत्यभिसृतायाः । कप्रत्ययेन अङ्गानाम-

मनो निहन्तुं मदनोपि बाणान्
करेण कौन्दान् बिभराम्बभूव ॥ ७९ ॥

सामान्यतः परकीयाऽभिसारिकामुदाहृत्य तद्विशेषानुदाहरन् ज्योत्स्नाऽभिसारिकामुदाहरति चन्द्रोदये इति । कांचित्कां चित्प्रत्याह चन्द्रोदये चन्द्रपदं गमनसाहाय्यसम्पादकतया ऽऽह्लादविशेषजनकतां व्यञ्जयति । अङ्गकेषु अनुकम्प्यगात्रेषु प्रियविरहतनुतया अनुकम्पायां कन् । चन्दनं विन्यस्याऽऽलिप्य । श्वेते हि श्वेतवस्तुनो झटिति भेदप्रतीतिर्न भवतीति धिया चन्द्रकरनिकरसरूपचन्दनधारणमकरोदिति भावः । एत्र च तनुतराणामङ्गानां विरहयोगाद्दूरतया चन्दनदीधितावदृश्यत्वेपि चन्दनलेपसम्पादनेनाऽत्यन्ताऽदृश्यत्व ध्वन्यते । विहस्य स्मित्वा सम्यगिदमलक्ष्यतासम्पादकं जातमिति धियेति भावः । यद्वा हास्यस्यापि सुधानिधिदीधितिसमतया ऽत्यन्ताऽलक्ष्यतासम्पादक कर्मैतदिति धियेति भावः । अथ वा एतावत्समयमनङ्गो मामपीडयदिदानीं किमनेन विधेयमिति धियेति भावः । विनिर्गतायाः प्रियं प्रत्यभिसृतायाः मनश्चित्तं निहन्तु व्यापादयितुम् । एवं चैतादृशसगर्वाऽविचारकारिप्रधानभूतचित्तव्यापादनेनेतरदिन्द्रियज्ञानमपि व्यापादितप्रायमिति व्यज्यते । मदनोपि मन्मथोपि । तद्गर्वमसहमान इति यावत् । करेण

लपना नवरूपता व्यज्यते । मनो निहन्तुं नायकं प्रति मनो गमयितु प्रेषयितुमुपर्युपरि वेगेन बाणै प्रापयितुं कौन्दानिति । कुन्दानि विकासयति स्मेति भाव । विजातीयकुसुमसम्बद्धमनस्का मा दर्शनपथं गच्छेदिति धियेति तत्त्वम । अत्रार्थे निहतार्थता । के चित्तु निहन्तु व्यापादयितुमित्यर्थं इति तन्न सम्यगाभाति ॥ ७९ ॥

तमिस्राऽभिसारिका यथा ।

नाऽम्बुजैर्न कुमुदैरुपमेयं
स्वैरिणीजनविलोचनयुग्मम् ।
नोदये दिनकरस्य न वेन्दोः
केवले तमसि तस्य विकासः ॥ ८० ॥

किरणेन कौन्दान् कुन्दपुष्पाण्येव शरान् पुष्पशरत्वात्तस्येति भावः । विभराम्बभूव धध्रे । विरहिदुःसहकुन्दपुष्पाणि विकासयति स्म । एवं च तदप्येतस्याः श्वैत्यविशेषसंपादकतया ऽनुगुणमेव जातमिति व्यज्यते । उपजातिर्वृत्तम् । इन्द्रवज्रोपेन्द्रवज्रामिश्रितचरणत्वात् । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति तल्लक्षणात् ॥ ७९ ॥

तमिस्राऽभिसारिकामुदाहरति नाऽम्बुजैरिति । का चित्कांचित्प्रत्याह स्वैरिणीजनविलोचनयुग्मं स्वैरिणीजनो व्यभिचारिणीजनः तस्य नेत्रद्वन्द्वम् । जनपदं सर्वासामेकरूपतां द्योतयति । विलोचनपदं सूक्ष्मग्राहकतां व्यञ्जयति । अम्बुजैः सूर्यविकासिभिरित्यर्थः । कुमुदैश्चन्द्रविकासिभिः नोपमेयम् । तत्र हेतुमाह दिनकरस्य सूर्यस्य इन्दोश्चन्द्रस्य उदये तस्य न विकासः किं तु केवले निबिडे तमस्यन्धकारे विकासः । व्यतिरेकालङ्कारो ऽत्र । स्वागतावृत्तम ॥ ८० ॥

व्यभिचारिणीविलोचनयुग्मं चन्द्रसूर्यविकासिभिरम्बुजैः कमलैश्च नोपमेयं यतो ऽस्य तदुदये न विकासः किं तु निबिडाऽन्धकार एव विकासः । तद्वयोपादानं चिन्त्यप्रयोजनम् ॥ ८० ॥

दिवसाऽभिसारिका यथा ।

पल्लीनामधिपस्य पङ्कजदृशां पर्वोत्सवाऽऽमन्त्रणे
जाते सद्मजना मिथः कृतमहोत्साहं पुरः प्रस्थिताः ।
सव्याजं स्थितयोर्विहस्य गतयोः शुद्धान्तमत्राऽन्तरे
यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥८१॥

दिवसाऽभिसारिकामुदाहरति पल्लीनामिति । पल्लीनां घोषाणाम् अधिपस्य स्वामिनः पङ्कजदृशां कमलनयनानाम् पर्वोत्सवामन्त्रणे पर्वणि चैत्रपौर्णमास्यादौ उत्सवः कौतुक तदर्थमामन्त्रणे जाते पल्ल्यधिपाऽङ्गनाभिः सम्पादिते सति सद्मजना गृहजनाः मिथः परस्परं कृतमहोत्साहं संपादितो महोत्साह उद्योगो यत्र क्रियायाम् । पुरः अग्रे सान्तरमित्यर्थः । प्रस्थिताः प्रचलिताः । पल्ल्यधिपसदनमित्यर्थः । अत्रान्तरे एतत्समये सव्याजं सकपटं किं चिद्व्यपदिश्य स्थितयोः क्रीडनार्थं विहस्य कथमेते प्रतारिता इति धियेत्यर्थः । शुद्धान्तमवरोधं गतयोः प्राप्तयोः स्विन्नकपोलयोः परस्पराऽङ्गसङ्गजातसात्त्विकभावोदयादिति भावः । यूनोस्तरुणयोः ।

पल्लीनामिति । पल्ली नाम जनवासग्रामः । तासामधिपस्येति बहुत्वैकत्वाभ्यां भाग्योत्कर्षो व्यज्यते । निमन्त्रणस्याऽपरिहार्यत्वं वा । तदीयपङ्कजदृक्सम्बन्धिकौमुद्युत्सवादिरूपपर्वोत्सवे आमन्त्रणे जाते सति स्वगृहस्थानामिति शेषः । गृहजनाः परस्परसम्पादितोद्योगं यथा भवति तथा पुरः अग्रे सादरमित्यर्थः । प्रस्थिता पल्ल्यधिपसदनमिति शेषः । तत्रान्तरे एतत्समये सव्याजं किं चिद्व्यपदिश्य स्थितयोः कथमेते प्रतारिता इति धिया विहस्य शुद्धान्तम् अवरोधं गतयोः परस्पराङ्गसम्बन्धेन सात्त्विकभावोदयात् स्विन्नकपोलयोः को ऽपि सर्वतो विलक्षणः कण्ठग्रहः आश्लेषो विजयते । अनेनाऽऽलिङ्गने ऽवसानाऽभावो व्यज्यते ॥ ८१ ॥

सामान्यवनिता ऽभिसारिका यथा।

लोलच्चोलचमत्कृति प्रविलसत्काञ्चीलताझङ्कृति
न्यञ्चत्कञ्चुकबन्धबन्धुरचलद्वक्षोजकुम्भोन्नति।
स्फूर्जद्दीधिति विस्फुरद्गति चलच्चामीकराऽलंकृति
क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना॥८२॥

पुमान् स्त्रियेत्येकशेषः। कोप्येष सर्वतो विलक्षण इत्यर्थः। कण्ठग्रहः कण्ठाश्लेषः विजयते सर्वोत्कर्षेण वर्त्तते। एवं चाऽऽलिङ्गनाऽवसानाऽभावो व्यज्यते। ननु ज्योत्स्नाभिसारिकादयो भेदाः परकीयाया एव न सर्वासामित्यत्र किं विनिमकमिति चेत्प्रकरणमेवेत्यवेहि। कथमन्यथा एता अन्यसम्भोदुःखिता इत्यादिवन्नालिखत्, कथं च स्वैरिणीपदमदाल्लक्ष्ये, इत्यलं वृथावाग्विलासेन। शार्दूलविक्रीडितं वृत्तम्॥ ८१॥

वेश्यामभिसारिकामुदाहरति लोलच्चोलेति। गतिविशेषवशात् चञ्चलं यच्चोलमंशुकं तस्य चमत्कृतिश्चमत्कारो यत्र। चोलेति पाठे नामैकदेशवचनन्यायेन निचोलेत्यर्थः। लोलपदं स्थानाऽनवस्थितत्वं द्योतयति तच्च गमनौत्कण्ठ्यम्।

लोलच्चोलेति। गतिविशेषाच्चञ्चलचोलेन तस्य वा चमत्कृतिः। यद्वा चोलेति निचोलेत्यर्थ.। नामैकदेशे नामग्रहणात्। निचोलः प्रच्छदपटः। अनेन गमनौत्कण्ठ्यम्। तदङ्गसङ्गेन शोभावत्काञ्चीलतायाः झङ्कारः। अत्र लतापदेन झङ्कारिभ्रमररणिताऽनुकारित्वम्। न्यञ्चन् गाढो नीचैर्गच्छन् वा। न्यङ् नीचखर्वह्रस्वाः स्युरित्यमर.। कञ्चुकबन्धनग्रन्थिः तया बन्धुरा रम्या। अत एव वलन्ती स्फुटतिर्यक्प्रसारिणी वा वक्षोजकुम्भोन्नतिर्यत्र। अञ्चलचाञ्चल्येन व्यक्तभूषणतया प्रकटकान्तगमनौत्सुक्येन विस्फूर्जन्ती शीघ्रा गतिर्यत्र। अत एव चञ्चलविभूषणानि यत्र। क्रियाविशेषणानि एतानि। कृतिनः अनिर्वचनीयसम्पत्तिशालिनः॥ ८२॥

मुग्धाया लज्जाप्राधान्येन, मध्याया लज्जामदनसाम्येन, प्रगल्भायाः प्राकाश्यप्राधान्येन, धीराया धैर्यप्राधान्येन, अधीराया अधैर्यप्राधान्येन, धीराऽधीराया धैर्याऽधैर्यप्राधान्येन, ज्येष्ठायाः स्नेहाधिक्यप्राधान्येन, कनिष्ठायाः स्नेहन्यूनत्वप्राधान्येन, परोढायाः संगुप्तिप्राधान्येन, मुग्धाया इव कन्यकायाश्च, सामान्यवनिताया धनप्राप्तिप्राधान्येनाऽष्टविधनायिकावर्णनमिति विशेषः ।

किं च प्रविलसत्काञ्चीलताऽऽलङ्कृति प्रविलसन्ती शोभाशालिनी तदङ्गसङ्गादिति भावः । या काञ्चीलता मेखला तस्या झङ्कृतिः स्वरविशेषो यत्र । न्यञ्चन्नीचैर्गच्छन् यः कञ्चुकबन्धः कूर्पासकग्रन्थिः तया बन्धुरा नम्रा । बन्धुरं तून्नताननमित्यमरः । अत एव चलन्ती तिर्यक्प्रसारिणी वक्षोजकुम्भोन्नतिः कुचकलशद्वीवना यत्र । स्फूर्जद्दीधिति स्फूर्जन्ती दीधितिर्यत्र शीघ्रगमनौत्सुक्यादिति भावः । अत एव चलच्चामीकरालङ्कृति चलन्ती चञ्चला चामीकराऽलंकृतिः सौवर्णाऽलङ्करणादिर्यत्र । सर्वाण्येतानि क्रियाविशेषणानि । वाराङ्गना वेश्या कस्यापि कृतिनः अनिर्वचनीयसंपत्तिशालिनः । यत्तु सुकृतिनः कुशलस्येत्याहुस्तत्पक्तताऽसङ्गतरसङ्गतम् । क्रीडाकुञ्जगृहे केलिनिकुञ्जसदनम् प्रयात्यभिसरति । शार्दूलविक्रीडितं वृत्तम् ॥८२॥

निरूपितं परिशेषयति मुग्धाया इत्यादि । प्राकाश्यम् । मुग्धाया इवेति । लज्जाप्राधान्येनेत्यर्थः ।

प्राकाश्यं प्रागल्भ्यम् । मुग्धाया इवेति । लज्जाप्राधान्येनेत्यर्थः ।

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते॥८३॥

सोऽप्यत्पतिकां नवमीं नायिकां निरूपयितुं भूमिकामारचयन् प्राचीनसंमतिं दर्शयति। प्रस्थानमिति। अव्यवहिताऽग्रिमसमयप्रियविदेशगमनकृतमतिपतिविरहविधुरा नायिका स्वजीवितमुपदिशति हे जीवित। जीवितपदं प्रियत्वं तच्च सदुपदेशार्हत्वं व्यञ्जयति। वलयैः कङ्कणैः प्रस्थानं गमनं कृतम् अजस्रं निरन्तरम् प्रियसखैः प्रियतममित्रैः अस्रैरश्रुभिः गतं प्रचलितम्। धृत्या धैर्येण क्षणमपि नाऽऽसितं न स्थितम्।

प्रस्थानमिति। हे जीवित तेनोपदेशार्हत्वम्। वलयैः कङ्कणैः प्रस्थानं कृतम्। एवं च तात्कालिकविरहजनितनितान्तकार्श्यवशाद्देकमपि कङ्कणं न स्थाने स्थितमिति भाव। किं चाऽस्रै रक्तैः विरहदाहवशात् निरन्तरं गतं यद्वा अस्रैरश्रुभिरित्यर्थः। धृत्येति। स्त्रीत्वेन मत्प्रतीक्षाकारित्वौचित्येऽपि तदकरणेन विजातीयस्य तव तदनुचितमेवेति व्यज्यते। चित्तेन गन्तुमुद्युक्तम्। तेन प्रियस्य समस्थितिमत्त्वेऽपि तत्पश्चात्स्थित्यभावो व्यज्यते। यातुं देशान्तरं गन्तुं समं परस्परैरेककालं गन्तव्ये सति प्रियतममन्तरा स्थातुमशक्यत्वादिति भावः। प्रियस्य कान्तस्य सुहृदां वलयादीनाञ्च सार्थः समूहः किमुत्सृज्यते इत्यन्वय। यद्वा अवगतपतिविदेशगतिमतिर्दयिता दयितं प्रत्याह हे जीवितप्रिय जीवितात्प्रिय एवं चोपदेशार्हत्वम्। अर्थाद्वलयादीनाम्। यातु निश्चितचेतसि सति सर्वे वलयादयः प्रस्थिताः। एवं च तथापि गन्तव्ये सति त्वत्प्रस्थानसमसमयप्रस्थानकरणात् सुहृदामेषां सार्थः किमुत्सृज्यते। एवं च त्वत्प्रस्थानज्ञानमात्रादेव वलयादिभिर्गतं जीवितेनापि गन्तव्यमिति विघ्नापदर्शनादनुरूपचेष्टा द्योत्यते। यद्यपि प्रियपदे कथितपदत्वं तथापि विरहिनायिकावाक्यत्वाददोषः॥८३॥

इत्यादिप्राचीनग्रन्थलेखनादग्रिमक्षणे देशान्तरनिश्चितगमने प्रेयसि प्रोष्यत्पतिकापि नवमी नायिका भवितुमर्हति। तथा हि। तस्याः प्रोषितपतिकाविप्रलब्धोत्कासु नाऽन्तर्भावः। भर्तुः सन्निधिवर्तित्वात्। न कलहान्तरितायामन्तर्भावः। कलहाऽभावादनवमानितपतित्वाच्च। नापि खण्डितायामन्तर्भावः। प्रियस्याऽन्योपभोगचिह्नितस्याऽऽगमनाऽभावात्। प्रियायाः कोपाऽभावदर्शनात् काकुवचनकातरप्रेक्षणादिसञ्चिन्तान्तः

मनसा पुरस्तादग्रत एव गन्तुं व्यवसितमुद्युक्तम्। प्रियतमे कान्ते यातु देशान्तरङ्गन्तुं निश्चितचेतसि कृतनिर्णये सति समं परस्परमेककालं प्रस्थिताः चलिताः। गन्तव्ये सति प्रियतमे ऽत एव स्थातुमशक्यत्वात् प्रियसुहृत्सार्थः प्रियसुहृदां कान्तनिजमित्राणां वलयादीनां सार्थः समूहः किमु त्यज्यते। किमुत्सृज्यते। एवं चाऽवश्यं गन्तव्यत्वे पश्चादवस्थितसा परित्यागो ऽत्यन्ताऽनुचित इति भावः। शार्दूलविक्रीडित वृत्तम् ॥ ८३ ॥

ननु एवमुक्ताऽष्टविधनायिकास्वेवाऽन्तर्भावो ऽस्त्वेतस्या इत्यत आह तस्या इत्यादि। प्रोष्यत्पतिकेति लक्ष्यनिर्देशः। लृटि वसतेरुष्यदिसासिद्धेः। लृटः सद्वेति शत्रादेशेन प्रवत्स्यत्पतिकेति वक्तव्यम्।

ननूक्ताऽष्टविधनायिकास्वेव तासामन्तर्भावो ऽस्त्वित्यत आह तस्या इति। लक्षण त्विति। लक्षणे इत्युपलक्षणम्? प्रोष्यत्पतिकेति लक्ष्यनिर्देश.। प्रवत्स्यदिति पाठ उचित.।

पक्षपातित्वदर्शनाच्च । न वासकसज्जायामन्तर्भावः । वारनियमाऽभावात् । सज्जीकरणाऽभावनिर्वेदादिदर्शनाच्च । न स्वाधीनपतिकायामन्तर्भावः । अग्रिमक्षणे एव सङ्गस्य विच्छेददर्शनात् । न हि स्वाधीनपतिकायाः कदा चिदपि सङ्गविच्छेद इति संप्रदायः । व्रजन्नपि पतिः स्वाधीनपतिकया निरुध्यते ऽन्यथा भर्तरि स्वाधीनत्वमेव भज्येत । नेह तथा । सर्वथा भर्तुर्विदेशगमनात् । किं च निर्वेदाऽश्रुपातनिःश्वासवनविहारादिमदनमहोत्सवव्यतिरेकदर्शनाच्च । नाप्यभिसारिकायामन्तर्भावः । अभिसारोत्सवाऽभावात् । अन्तस्तापदर्शनाच्चेति युक्तमुत्पश्यामः । लक्षणं तु यस्याः पतिरग्रिमक्षणे देशान्तरं यास्यत्येव सा प्रोष्यत्पतिका । अस्याश्चेष्टा । काकुवचनकातरप्रेक्षणगमनविघ्नोपदर्शननिर्वेदसन्तापसंमोहनिःश्वासबाष्पादयः ।

मुग्धा प्रोष्यद्भर्तृका यथा ।

प्राणेश्वरे किमपि जल्पति निर्गमाय
क्षामोदरी वदनमानमयाञ्चकार ।

मुग्धां प्रोष्यत्पतिकामुदाहरति । प्राणेश्वरे इति । का

प्राणेश्वरे इति । ईश्वरत्वेन नियोगाऽनर्हत्वं निर्गमाय विदेशगमनाय विरहदुःखोद्रेकजकण्ठाऽवरोधवशात् किमपि ईषदव्यक्तं चेत्यर्थः । जल्पति पृच्छति वदनं नम्रं चकार लज्जया किमपि वक्तुं न शक्तवतीति भावः । तस्यास्तूष्णीं स्थितावपि आली यत्नमकरोदि-

आली पुनर्निभृतमेत्य लतानिकुञ्ज-
मुन्मत्तकोकिलकलध्वनिमाततान ॥ ८४ ॥

मध्या प्रोष्यत्पतिका यथा ।

गन्तुं प्रिये वदति निःश्वसितं न दीर्घ-
मासीन्न वा नयनयोर्जलमाविरासीत् ।

चिव काञ्चित्प्रत्याह प्राणेश्वरे । ईश्वरपदं नियोगाऽनर्हत्वं व्यञ्जयति । निर्गमनाय विदेशगमनाय किमपि किञ्चिदपि विरहदुःखोद्रेकजकण्ठाऽवरोधादिति भावः । जल्पति पृच्छति सति क्षामोदरी कृशोदरी । क्षामपदमुक्तिपाण्डित्याऽभाववत्त्वं मुग्धात्वं च ध्वनयति । यद्वा विरहवशान्निर्गच्छत्प्रकटस्थिरसपराधाऽभावं गमयति । वदनमाननमानमयाञ्चकार नम्रीचकार तूष्णीं बभूवेत्यर्थः । लज्जया किमपि वक्तुमशक्तत्वात् तस्यां तूष्णीमवस्थितायामपि सखी यत्नमकरोदित्याह आलीत्यादि । आली सखी पुनः निभृतं गुप्तं क्रियाविशेषणमेतत् । लतानिकुञ्जम् एत्याऽऽगत्य उन्मत्तकोकिलकलध्वनिम् उन्मत्तपिकमनोज्ञशब्दम् । एवं च वसन्तसमयमवगत्यायं स्थास्यतीति धिया इति भावः । उन्मत्तपदं वसन्तवतीत्वं द्योतयति । कोकिलेति पुंलिङ्गनिर्देशः कामिनी-

त्याह आलीति । पुनस्त्वर्थः । आली त्वित्यर्थः । निभृतं गुप्तं लतानिकुञ्जम् । अनेन स्वसजातीयबहललतापरिवृततया क्रियमाणकपटस्य प्राकट्याऽनर्हत्वं द्योत्यते । वसन्तसमयमवगत्याऽयं स्थास्यतीति धिया वसन्तवशादुन्मत्तकोकिलस्य कलशब्दं विस्तारयामासेत्यन्वयः ॥ ८४ ॥
गन्तुमिति । निःश्वसितमित्येकवचनत्वेनैकोऽपि निःश्वासादिर्नाऽभूदिति व्यज्यते । प्रश्नसमसमयसञ्जातमूर्च्छावशादिति भावः । परं

आयुर्लिपिं पठितुमेणदृशः परं तु
भालस्थलीं किमु कचः समुपाजगाम ॥ ८५ ॥

नखशङ्काऽभावमथ वा स्वजातीयशब्दतया प्रमाणभावं ध्वनयति । स च मरुया सानुरोधचमत्कारम् आततान विस्तारयामास । एवं च भाविविरहविह्वलतया पिकशब्दाऽनाकर्णनेऽपि न का चित्क्षतिरिति ध्वन्यते । वसन्ततिलकावृत्तम् ॥८४॥

मध्यां प्रोष्यत्पतिकामुदाहरति गन्तुमिति । का चित्कांचिदाह प्रिये कान्ते । प्रियपदेन विरहाऽसहिष्णुतां ध्वनयति । गन्तुं विदेशं यातुम् वदति पृच्छति सति एणदृशो मृगलोचनायाः । एणदृश इत्यनेन चञ्चलता तया च विरहकातरता द्योत्यते । दीर्घमायतं दुःखवशात् निश्वसितं निश्वासः न तु निःश्वासाः । नागीत् । नयनयोर्लोचनयोः न तु लोचनस्य जल न तु जलानि आविरासीत् । प्रकटीबभूव । प्रश्नसमयसञ्जातविरहमूर्च्छोद्रेकवशादिति भावः । किं तदा तत्राऽऽसीदित्यत आह परं त्वेतदभूत् कचः केशकलापैकदेशः चैलाञ्चलविस्रंसनात् भालस्थलीं ललाटदेशं समुपाजगामाऽभिससार भालस्थलीमिति स्त्रीलिङ्गनिर्देशेन कच इति पुंल्लिङ्गनिर्देशेन च तां प्रति तस्याऽभिसरणाऽनौचित्येपि तत्कारितया

तु कचः केशकलापैकदेशः कच इव कचर्षितुल्यः । मूर्च्छावशेन चेलाञ्चलविस्रंसनाद् भालस्थलीं जगाम । आयुर्लिपिं पठितुं किमु । एतावदेवायुः उताऽधिकमस्ति न वेति निश्चेतुमिति भावः । कचं भालस्थलीमिति स्त्रीत्वपुंस्त्वाभ्यामावयोरिव तवापि गन्तुमनुचितमिति व्यज्यते । अश्रूणामप्राकट्येन लज्जावत्त्वं मूर्च्छावत्त्वेन मदनबाधावत्त्वं च व्यज्यते । तेन मध्यात्वम् ॥ ८५ ॥

प्रौढा प्रोष्यत्पतिका यथा।

नाऽयं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वर-
स्तेनाऽहं विहिताञ्जलिर्यदुपते पृच्छामि सत्यं वद।
ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते
स्यादत्रैव परत्र तत्किमु विषज्वालावलीदुःसहम्॥८६॥

केशपाशे कचेर्ष्यादिकार्यवत्ता द्योत्यते। तामेवोत्प्रेक्षामुखेनाऽऽह किमुशब्द इवार्थे। आयुर्लिपिं ब्रह्मलिखिताऽऽयुष्याक्षरपङ्क्तिम् पठितुं वाचयितुमिव तस्यास्तत्र सत्त्वादिति भावः। एवं चैतावदेवायुः किं चिदधिकमस्ति न वेति निश्चितुमिति व्यज्यते। अश्रूणामप्राकट्येन लज्जावत्त्वं मूर्च्छया च मदनबाधावत्त्वमिति मध्यात्वं ध्वन्यते। उत्प्रेक्षालङ्कारः। वसन्ततिलकावृत्तम्॥८५॥

प्रौढां प्रोष्यत्पतिकामुदाहरति नायमिति। का चिदङ्गना द्वारावतीगमनोद्युक्तं श्रीकृष्णं प्रत्याह भो यदुपते यदूनां पतिः तत्सम्बोधनम्। हे श्रीकृष्ण। एवं चास्मत्पालनाऽर्हत्वं मिथ्याभाषणाऽनर्हत्वं पारलौकिकसकलवृत्ताऽभिज्ञत्वं वा ध्व-

नायमिति। यदूनां पते नाऽस्माकम्। यद्वा यदुपतित्वेन पारलौकिकसकलवृत्तान्ताऽभिज्ञत्वं तेन प्रश्नयोग्यता। सुभ्रुवामिति साधारणप्रश्नेनोत्तरदाने सङ्कोचाऽभावो व्यज्यते। अयमपलापाऽनर्हो विरहसन्तापः शरीरत्यागेपि न मुञ्चति। तनुपदेन स्पृहणीयत्वम् अतो बद्धाञ्जलिर्दीना पृच्छामि सत्यं वद सशपथं वद। ताम्बूलादि मृतोद्देशेन दीयमानं किमिहैव परलोकेपि स्यादित्यन्वयः। अत्र यथोक्तेन वस्तुना त्वद्वियोगेन मन्मरणमवश्यमिति विज्ञाय यथोचितमाचरेति व्यज्यते॥८६॥

परकीया प्रोष्यत्पतिका यथा।

न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरो-
स्त्यक्ता नीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम्।
अङ्गानां शतयातना नयनयोः कोपि क्रमो रौरवः
कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते॥८७॥

न्यते। सुभ्रूपदं पुरुषाणां तथाविधविरहाऽभावं व्यनक्ति। बहुवचनं च सर्वसाधारणप्रश्नकरणेन स्वस्याऽपरार्थोद्योगशालित्वं साधारणप्रश्नोत्तरदाने सङ्कोचाऽनर्हत्वं च नायकस्य व्यञ्जयति। अयं वियोगज्वरो विरहसन्तापः। तनुत्यागे शरीरत्यागेपि न मुञ्चति सजति यत् तेन हेतुना विहिताञ्जलिः बद्धाञ्जलिः अहं पृच्छामि प्रश्नं करोमि। सत्यं सत्यपदं शपथवत्तामावेदयति। वद ब्रूहि। किं तदत आह उदकं चन्दनं पटीरं कुसुमं यद्बन्धुभिः सुहृद्भिर्दीयते मृतोद्देशेन तत्सर्वम् अत्रैव एतल्लोके इव परत्र परलोकेपि किमु विषज्वालावली-दुःसहं स्यात् विरहिजनस्येह यथैतद्दाहकं तथैव किं परत्रेति

न्यस्तमिति। हे कान्तेति सम्बुद्धिपदाऽनुपादानं दुःखोद्रेकमावेदयति। पन्नगत्वेन भययोग्यता। मूर्द्धेत्यनेन साहसम्। पादयुगलमित्यनेन भीतिशून्यत्वम्। किञ्च गुरोः श्वशुरादेर्भीतिस्तदाज्ञाकारित्वं विशेषेण त्यक्तम्। गुरुत्वेन माननीयता नीतिः कुलमर्यादा त्यक्ता। एवं त्वन्निमित्तं किं न पापं दुष्कृतं कृतम् अपि तु सर्वमेव कृतमित्यर्थः। अतस्त्वयि प्रस्थिते प्रस्थानोद्यते अङ्गानां शतयातना असङ्कुचतीव्रवेदना रौरवस्य नरकविशेषस्य सम्बन्धी क्रमो विन्यास इत्यर्थः। कुम्भीपाकपराभवः पीडा भविष्यति इदं युक्तं समञ्जसमित्यर्थः। अङ्गादीनां प्रत्येकाऽपराधित्वेन प्रत्येकं दण्ड इति भावः॥८७॥

सामान्यवनिता प्रोष्यत्पतिका यथा ।

मुद्रां प्रदेहि वलयाय भवद्वियोग-

मासाद्य यास्यति बहिः सहसा यदेतत् ।

वक्तव्यमिति भावः । एवं च त्वद्वियोगोऽवश्यं मन्मरणकारणमिति विज्ञाय यथोचितमाचरणीयमिति द्योत्यते । शार्दूलविक्रीतं वृत्तम् ॥ ८६ ॥

परकीयां प्रोष्यत्पतिकामुदाहरति न्यस्तमिति । का चिदङ्गना नायकं प्रत्याह हे कान्त पन्नगमूर्ध्नि पन्नगस्य विषधरस्य मार्गे स्थितस्येत्यर्थः । मूर्ध्नि मस्तके । पन्नगपदं भयजनकतां गमयति । मूर्ध्निपदेन साहसमभिव्यज्यते । पादयुगलं चरणद्वन्द्वं, युगलपदं भीतिशून्यतामावेदयति । न्यस्तं स्थापितम् । गुरोः श्वशुरादेः भक्तिरितरापेक्षया माननीयतया विभागः, सेवा वा । तदाज्ञाकारित्वमित्यर्थः । अत्यन्तं विमुक्ता त्यक्ता । नीतिः स्वकुलमर्यादापि सक्ता इति भवतो हेतोः । षष्ठी हेतुप्रयोगे इति षष्ठी । मया किं दुष्कृतं न कृतम् । अपि तु सर्वं कृतमित्यर्थः । अतः त्वयि प्रस्थिते सति प्रस्थानोद्युक्ते सति अङ्गानामवयवानां शतयातना असङ्ख्यतीव्रवेदना किं च नयनयोः कोप्यनिर्वचनीयः रौरवः रौरवस्य नरकविशेषस्यायं रौरवः । तत्सम्बन्धीत्यर्थः । क्रमो विन्यासः । किं च मनसश्चेतसः कुम्भीपाकपराभवः कुम्भीपाके नरकविशेषे पीडा-

मुद्रामिति । भवद्वियोगमासाद्यैतद्वलयं सौवर्णाग्रमिति कङ्कणम् । एकत्वमविवक्षितं वा । सहसा अकस्मात्त्वद्वियोगज्ञानमात्रेणेति भावः । यास्यति हस्ताद्बहिः । एवं च तदानीं याच्ञावसरो व्य-

इत्थं निगद्य विगलन्नयनाम्बुधारा
वाराङ्गना प्रियतमं करयोर्बभार ॥ ८८ ॥

भविष्यति इदं युक्त समञ्जसम् । अङ्गादीनां प्रत्येकस्याऽपराधितया प्रत्येक दण्ड इति भावः । एवं च युक्तैव दुष्कृतिनो नरकाऽवाप्तिरिति भावः। शार्दूलविक्रीडितं वृत्तम् । समासोक्तिरलङ्कारः ॥ ८७ ॥

सामान्यवनितां प्रोष्यत्पतिकामुदाहरति मुद्रामिति। कांचिद्वारवधूटत्तं कां चित्प्रत्याह वाराङ्गना वेश्या वलयाय कङ्कणाय। एकवचनम् अनेककङ्कणधारणाऽसामर्थ्यं व्यञ्जयति। मुद्रां प्रदेहि वितर । ननु वलयमेवाऽस्तीत्यत आह यत् यस्मात् भवद्वियोगं त्वदीयविरहम् आसाद्य प्राप्य एतद्वलयम् । एकत्वमविवक्षितम् । सहसा ऽकस्मादेव । एवं च तदानीं याच्ञावसराऽभावो व्यज्यते । हस्ताद्बहिः यास्यति गमिष्यति। यद्वा वलयाय सौवर्णकङ्कणाय न तु गजदन्तादिनिर्मितवलयाद्यर्थे । मुद्रां प्रदेहि। यत् यस्मात् सौवर्णाग्रिमकङ्कणं हस्ताद्बहिर्यास्यतीत्यर्थः। एवं च त्वद्विरहजाततनुतावशादाकस्मिकङ्ककणाऽपगमे त्वन्मङ्गलैकचिन्तनप्रवणमनस्कया मया तथैवाऽवस्थातुमशक्यत्वादिति भावः । इत्थममुना प्रकारेण निगद्योक्त्वा विगलन्नयनाम्बुधारा निष्पतदश्रुपरम्परा प्रियतमं कान्तं करयोर्हस्तयोः बभार दध्रे । वसन्ततिलकावृत्तम् ॥ ८८ ॥

ज्यते। अतस्त्वद्विरहजाततनुतावशादाकस्मिककङ्कणाऽपगमे त्वन्मङ्गलैकरतया तथा वस्तुमशक्यत्वात् मुद्रामङ्गुलीयकं वलयाय एकवचनमनेककङ्कणधारणाऽसामर्थ्यात् । करयोरिति द्विवचनं निर्मोचनाऽर्हत्वं व्यञ्जयति ॥ ८८ ॥

अहितकारिण्यपि प्रियतमे हितकारिण्युत्तमा ।

अस्या उत्तमैव चेष्टा । यथा ।

पतिः शयनमागतः कुचविचित्रतोरःस्थलः
प्रसन्नवचनामृतैरयमतर्पि वामभ्रुवा ।
अचर्चि सुभगस्मितद्युतिपटीरपङ्कद्रवै-
रपूजि विलसद्विलोचनचमत्कृतैरम्बुजैः ॥ ८९ ॥

उक्तानामेव पुनरुत्तमादिभेदानाह । अहितेत्यादि ।

तत्रोत्तमामुदाहरति पतिरिति । का चित्कां चित्प्रत्याह । कुचविचित्रितोरःस्थलः । कुचाभ्यां विचित्रितं मुद्रितमुरःस्थलं यस्य । अन्याऽङ्गनालिङ्गनादिति भावः । तेन च प्रत्यक्षाऽपराधवत्ता व्यज्यते । शयनं पर्यङ्कदेशमागतः पतिः कान्तः वामभ्रुवा सुन्दरभ्रुवा । एवं च कौटिल्याऽभावो द्योत्यते । वाम सव्ये प्रतीपे च द्रविणे चाऽतिसुन्दरे इति विश्वः । प्रसन्नवचनामृतैः प्रसन्नानि मनोहराणि वचनानि तान्येवाऽमृतानि तैः ।

पति' शयनमिति । परनायिकालिङ्गनवशात्कुचमुद्रितोरःस्थलः । एतेन प्रत्यक्षदृष्टाऽपराधता । वचनामृतैः । अमृतत्वेन प्राणप्रदत्वम् । वामभ्रुवा सुन्दरभ्रुवा । सुभगा रमणीया स्मितद्युतिः सैव चन्दनस्य पङ्करूपो द्रवः । अत्र सुभगत्वेन दुर्लभत्वम् । द्युतिपदेन कान्तस्वान्तभवध्वान्तनिवारकता । पङ्कत्वेन गाढता । द्रवत्वेन सारता । प्रसन्नविलोचनचमत्कृतैः कटाक्षरूपैरित्यर्थः । विलासत्वेन दैर्घ्यम् । अम्बुजत्वेन सरसत्वम् । तेन कोपोदयाऽभावः । अतर्पीत्यादित्रयेण भक्त्यतिशयः । एवञ्च प्रत्यक्षदृष्टाऽपराधैर्निष्कपटैवंविधव्यापारकारित्वेनोत्तमात्वम् ॥ ८९ ॥

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | २ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ५ | ० | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टिकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| सांख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| सांख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ५ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |

# विज्ञापनम् ।

—:०—

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेक खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहित. | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ३ | ३ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीत-भाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ३ | ३ | ० |
| महर्षिकात्यायनप्रणीत शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यं | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (वृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् | ४ | ० |
| विवरणोपन्यास सटीकवाक्यसुधासहित खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) | ८ | ० |
| वेदान्तदीप. (श्रीभगवद्रामानुजाचार्यविरचित ) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |
| पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० | १ | ० |
| व्याकरणमिताक्षरा।सर्वतन्त्रस्वतन्त्रश्रीमदन्नभट्टप्रणीता ख० ३ | ३ | ० |
| रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता | २ | ० |
| न्यायलीलावती ( यन्त्रस्था ) | ० | ० |

ब्रजभूषण दास और कम्पनी

चांदनीचौक के उत्तर नई सड़क बनारस ।

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS:

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T H. GRIFFITH, M. A.,C. I. E.

AND

G. THIBAUT, PH. D.

*No. 87.*


---

# रसमञ्जरी ।

श्रीभानुभट्टप्रणीता

अनन्तपण्डितकृतव्यङ्ग्यार्थकौमुद्या

नागेशभट्टकृतप्रकाशेन च सहिता ।

# RASAMANJARI

BY

BHÂNU BHATTA,

*With the Commentries*

VYANGYÂRTHAKOUMUDÎ OF ANANTA PANDIT

AND PRAKÂSA OF NÂGEŚA BHATTA

EDITED BY

Râma Sâstri Tailanga,

PROFESSOR, GOVT. SANSKRIT COLLEGE, BENARES.

*Fasciculus III.*


BENARES.

*Published by the Proprietors Messrs Braj B Das & Co.,*

AND SOLD BY H D GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot*

---

Printed at the Vidyâ vilas Press,

BENARES.

1904.

हिताऽहितकारिणि प्रियतमे हिताऽहितचेष्टावती मध्यमा । अस्यास्तु व्यवहाराऽनुसारिणी चेष्टा । यथा ।

कान्ते साऽऽगसि कञ्चुकस्पृशि तया साचीकृतग्रीवया मुक्ताः कोपकषायमन्मथशरक्रूराः कटाक्षाऽङ्कुराः ।

अमृतपदं प्राणदातृत्वं व्यञ्जयति । अतर्पि प्रीणितः । सुभगस्मितद्युतिपटीरपङ्कद्रवैः । सुभगा समीचीना या स्मितद्युतिः सैव पटीरपङ्कद्रवः सरसचन्दनानि तैः । सुभगपदं दुर्लभत्वं द्योतयति । द्युतिपदं कान्तस्वान्तभयनिवारकतामावेदयति । पङ्कपदं गाढतां गमयति । द्रवपदं साररूपतां व्यनक्ति । अर्चिच चर्चितः । किं च विलसद्विलोचनचमत्कृतैरम्बुजैः । विलसती प्रसन्ने ये विलोचने नयने तयोर्यानि चमत्कृतानि चमत्काराः कटाक्षा इत्यर्थः । तान्येवाऽम्बुजानि कमलानि तैः । विलसत्पदं दैर्घ्यं ध्वनयति । अम्बुजपदं सरसतां सा च कोपोदयाऽभावं ध्वनयति । अपूजि पूजितः । अन्यत्रापि स्वसदनमागतः सुहृच्छीतलस्वच्छसलिलचन्दनकुसुमैः संपूज्यते इति लौकिकम् । रूपकालङ्कारः । पृथ्वीवृत्तम् ॥ ८९ ॥

मध्यमामुदाहरति कान्तेति । का चित्का चित्प्रत्याह सागसि साऽपराधे । एवं च कोपकारणमुचितमिति व्यज्यते । कान्ते नायके कञ्चुकस्पृशि चोलस्पर्शं कुर्वति सति । सान्त्व-

कान्तेति । सापराधे कान्ते सान्त्वनाद्यकृत्वैव कञ्चुकस्पर्शं कुर्वति सति कोपवशात् वक्रीकृतग्रीवया कोपेन कषायाः अत एव मन्मथशरवत्क्रूराः । तच्छराणां नूतनपल्लवरूपत्वेनारक्तता । यद्वा कोपकलुषितमन्मथशरवत्क्रूराः । मन्मथीयत्वेन दुःसहता कटा-

साऽऽकूते दरहासकेसरवचोमाध्वीकधाराऽलसा
प्रीतिः कल्पलतेव का चन महादानकृता सुभ्रुवा॥ ९०॥

नाग्रकृत्वैवेत्यर्थः। स्पृशिपदं भयचकिततां व्यनक्ति। साचीकृतग्रीवया वक्रीकृतकण्ठ्या कोपवशादिति भावः। तया सुभ्रुवा नायिकया कोपकषायमन्मथशरक्रूराः कन्दर्पबाणकठिनाः। तद्बाणानां नूतनपल्लवरूपत्वेन रक्तता। यद्वा कोपेन कषायितः कलुषितः यः मन्मथः तद्वत्क्रूराः। मन्मथपदं दुःसहतामावेदयति। कटाक्षाङ्कुराः अपाङ्गच्छटाः। अङ्कुरपदं तीक्ष्णतां व्यनक्ति। मुक्ताः प्रेरिताः। किं च साकूते साऽभिप्राये चाटुवचनरचनाकारिणि सति दरहासकेसरवचोमाध्वीकधारालसा। दरमीषत् हासो हसितम् प्रसादादिति भावः। तदेव केसरं किञ्जल्को यस्मिन्। एवं विधं यद्वचो वचनं तदेव माध्वीकं मधु। मधु माध्वीकमद्ययोरित्यमरः। तस्य या धारा प्रसृतिस्तया ऽलसा निर्भरा। माध्वीकपदमुन्मादजनकतां व्यनक्ति। अलमपद सविलासतां ध्वनयति। का चिदनिर्वचनीया प्रीतिः कल्पतेव कल्पलतावत्। कल्पलता

क्षाङ्कुरा मुक्ताः। अङ्कुरत्वेन तीक्ष्णता। साकूते साऽभिप्राये। चाटुवचनरचनाकारिणि सतीत्यर्थः। ईषद्धास एव प्रसादजन्मा केशरं यत्र तादृशवचोरूपमाध्वीकस्य धारा प्रसृतिः तया अलसा निर्भरा। माध्वीकत्वेनोन्मादकता। अलसत्वेन सविलासता। ईदृशी का चनाऽनिर्वचनीया प्रीतिः। मनोरथसम्पादकतया कल्पतेव दानीकृता। प्रीतेः सर्वाधिकत्वेन॥ ९०॥

हितकारिण्यपि प्रियतमे ऽहितकारिण्यधमा। एषैव च निर्निमित्तकोपना चण्डीत्यभिधीयते। अस्या निष्कारणकोपत्वादधमैव चेष्टा। यथा।

प्रस्थाने तव यः करोति कमलच्छायां मुखाम्भोरुहे
श्रीखण्डद्रवधारया शिशिरया मार्गं पुरः सिञ्चति।
तस्मिन् प्रेयसि विद्रुमद्रवनदीरिङ्गत्तरङ्गभ्रमि-
भ्रान्तक्लान्तसरोजपत्रसदृशा भूयो दृशा कुध्यसि॥९१॥

तुल्यत्वं च मनोरथसंपादकत्वात्। महादानीकृता दत्ता। प्रीतेः सर्वाऽधिकत्वेन दाने महती कल्पलतापि सकेसरमधुधारानिर्भरा भवति। मध्यात्व चात्र स्फुटमेव। शार्दूलविक्रीडितं वृत्तम्॥ ९०॥

अधमां लक्षयति हितेत्यादि।

अधमामुदाहरति प्रस्थाने इति। काचित्सखी नायिकां प्रत्याह तव प्रस्थाने प्रयाणाऽवसरे निकटवाटिकाऽशोकनिटपत्रिकाशकरणायेति भावः। मुखाम्भोरुहे वदनकमले। अर्थात् त्वदीये। कमलच्छाया कमलेनातपनिवारणं सजाती-

प्रस्थानेति। कमलच्छायामातपनिवारणाय प्रस्थाने उद्यानादिप्रयाणावसरे। तज्जातीयेन तस्य सेवाकरणात् प्रियस्याऽतिशयितप्रेमवत्ता तस्मिन्नपि विद्रुमस्य प्रवालस्य द्रवो यो निर्यासस्तस्य नदी तस्यां रिङ्गन्तः शोभाशालिनो ये तरङ्गाः तेषां यो भ्रमिरावर्तः तत्र भ्रान्तं भ्रमणं प्राप्तमत एव क्लान्तं म्लानं यत्सरोजपत्रं तत्सदृशाया। अत्र विद्रुमपदेन रक्तता रिङ्गत्तरङ्गेत्यादिना चञ्चलता। भूयो वारं वारम्। अत्र सम्बुद्ध्यनुपादानेन नायिकाया अनुचितकार्यकारित्वं व्यज्यते॥ ९१॥

विस्तरभिया प्रत्येकमेतासामुत्तममध्यमाऽधमभेदा नोदाहृता इति ।

विश्वासविश्रामकारिणी पार्श्वचारिणी सखी । अस्याः मण्डनोपालम्भशिक्षापरिहासप्रभृतीनि कर्माणि ।

यत्वेपि कमलेन त्वन्मुखातपवारणरूपसेवाविधायकतया प्रियस्याऽतिशयितप्रेमवत्ता व्यज्यते । यद्वा सजातीये सेवाऽपनोदनमुचितमिति ध्वन्यते । किं च शिशिरया शीतलया श्रीखण्डद्रवधारया । श्रीखण्डस्य चन्दनस्य यो द्रवो रसस्तस्य धारा तया । पुरो मार्गम् अग्रिमं प्रयाणं सिञ्चति तस्मिन् तादृशे प्रयेसि प्रिये । विद्रुमद्रवनदीरिङ्गत्तरङ्गभ्रमिभ्रान्तक्लान्तसरोजपत्रसदृशा । विद्रुमाणां प्रवालानां द्रवो निर्यासस्तस्य या नदी तस्यां रिङ्गन्तः खेलन्तः । शोभाशालिन इत्यर्थः । तरङ्गाः तेषां भ्रमिरावर्तः तत्र भ्रान्तं भ्रमणं प्राप्तम् अत एव क्लान्तं म्लानिमापन्नं सरोजपत्रं तत्सदृशया । विद्रुमपदमारक्ततां द्योतयति । रिङ्गत्तरङ्गेत्यादिना चञ्चलत्वं व्यज्यते । पत्रपदं प्राशस्त्यं व्यनक्ति । भूयो वारं वारम् बहुवारमित्यर्थः । दृशा दृष्ट्या क्रुध्यसि कोपं प्रकटयसि । अत्र सम्बुद्ध्यनुपादानमनुचितकार्यकारित्वं नायिकायां ध्वनयति । अधमात्वं स्फुटमेव । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ९१ ॥

प्रसङ्गात्सख्यादीन्निरूपयितु सखीकार्याणि विभजते अस्या इत्यादि । उपालम्भः सनिन्दवचनम् ।

प्रसङ्गात्सख्यादीन्निरूपयति विश्वासेति। उपालम्भ. सनिन्दवचनम् ।

तत्र मण्डनं यथा।

रतनकनकमहीधरोपकण्ठे
प्रियकरपल्लवमुल्लसत्प्रमोदम्।
रहसि मकरिकामिपालिखन्ती
कमलमुखी कमलैः सखीं जघान॥ ९२॥

तत्र मण्डनमुदाहरति स्तनकनकेति। का चित्कां चिदाह स्तनकनकमहीधरोपकण्ठे। स्तनौ कुचौ तावेव कनकमहीधरौ स्वर्णगिरी तयोरुपकण्ठः सन्निहितप्रदेशः। कनकपदं गौरत्वं व्यनक्ति। महीधरपदं काठिन्योत्तुङ्गत्वे व्यञ्जयति। उपकण्ठपदं नायककरस्पर्शयोग्यत्वं ध्वनयति। मकरिकामिषात् पत्रावल्यादिलिखनव्याजात् उल्लसत्प्रमोदं सरोमाञ्चमित्यर्थः। कुचस्पर्शादिति भावः। प्रियकरपल्लवम् प्रियस्य कान्तस्य हस्तपल्लवम्। प्रियपदं लिखनौचितीं व्यनक्ति। पल्लवपदमरुणतां सा च काश्मीरादिलिखनौचित्यं द्योतयति। रहस्येकान्ते। एवं च नायकं करकुचसम्बन्धौचित्यं ध्वन्यते। लिखन्ती सखी कमलमुखी नायिका। एवं च सन्तोषाऽतिशयो व्यज्यते। कमलैः क्रीडासरोजैः जघान ताडयामास। कथमपदमेन लिखतीति भावः। यद्यप्येतत्परिहासोदाहरणमपि सम्भवति तथा-

स्तनकनकेति। उपकण्ठः सन्निहितप्रदेशः। कनकत्वेन गौरता महीधरत्वेन काठिन्योत्तुङ्गते। उपकण्ठपदेन उपरि नायककरस्पर्शयोग्यता ध्वन्यते। मकरिकापत्रावली उल्लसत्प्रमोदं कुचस्पर्शेन सरोमाञ्चमित्यर्थः। प्रियकरत्वेन लेखनौचित्यम्। रहसि एकान्ते। तेन नायककरस्पर्शात्कुचसम्बन्धौचित्यम्। जघान अन्यदेव लिखतीति धियेति। एतत्परिहासोदाहरणमपि वक्तुं शक्यम्। परिहासपदेन शब्दरूप एव गृह्यतइति केचित्॥ ९२॥

उपालम्भो यथा ।

सान्द्रध्वानैर्मुखरितदिशः श्रेणयस्तोयदानां
धाराऽऽसारैर्धरणिवलयं सर्वतः प्लावयन्ति ।
तेन स्नेहं वहति विपुलं मत्सखी युक्तमेव
त्वं निःस्नेहो यदसि तदिदं नाथ मे विस्मयाय ॥९३॥

ऽयत्र परिहासस्य शब्दरूपत्वेन तदभावान्न तदुदाहरणता ।
पुष्पिताग्रावृत्तम् ॥ ९२ ॥

उपालम्भमुदाहरति । सान्द्रध्वानैरिति । का चिन्नायिकासखी नायकं वक्ति हे नाथ स्वामिन् । नाथपदं स्वेच्छाकार्यकारित्वं व्यञ्जयति । सान्द्रध्वानैरनवरतस्वनैः मुखरितदिशः मुखरिताः वाचालिताः दिशः ककुभो याभिस्ताः । तोयदानां मेघानां श्रेणयः पङ्क्तयः धारासारैः धरणिवलयं भूमण्डलं सर्वतः परितः प्लावयन्त्याप्लुतं कुर्वन्ति । तेन हेतुना मत्सखी । एवं चाऽस्मद्धृदयसदया नायिकेति ध्वन्यते । युक्तमेवाऽबाधितमेव विपुलं सातिशयं स्नेहं प्रेम । प्रेम स्नेहो ऽथ दोहदमित्यमरः । वहत्यङ्गीकरोति । तथाविधोद्दीपकपयोदपङ्क्तिविलोकनेन मद्विरहमसहमानः प्रियो ऽधुनैवाऽऽयास्यतीति धियेति भावः । तथात्वेपि यत्त्वं निःस्नेहः प्रेमशून्यो

सान्द्रेति । नेन निविडशब्देन मेघधारासम्पातकरणभूवलयप्लावने यन्मत्सखी । तेन स्वतत् सहृदयत्वं तस्या व्यज्यते । सातिशयं स्नेहं त्वद्विषयं वहति । तद्युक्तमेव । तथाविधोद्दीपनेन तदालोकनात्त्वदागमननिश्चयेन चेति भाव । तथात्वेपि यत्त्वं प्रेमशून्य इदमाश्चर्याय तथाविधोद्दीपनस्यायिगणनात् तथानुरागिण्यामप्यननुरागाच्चेति भाव । एवं च नायिका सहृदया त्वं तु दुर्हृदय इति सनिन्दवचनरूपोपालम्भो व्यज्यते ॥ ९३ ॥

शिक्षा यथा।

सानन्दमालि वनमालिविलोकनाय
निर्गच्छ कुञ्जमिति किं तु विचारयेथाः।
झङ्कारिणो मधुलिहो दिवसे भ्रमन्ति
रात्रौ पुनश्चपलचञ्चुपुटाश्चकोराः॥ ९४॥

ऽसि वर्तसे तदिदं मे विस्मयायाऽऽश्चर्याय। तथाविधाऽनुरागशालिन्यामपि भवाननुरागीति कथं प्रियत्वमिति विस्मय इति भावः। मन्दाक्रान्तावृत्तम्॥ ९३॥

शिक्षामुदाहरति सानन्दमिति। का चित्सखी नायिकां प्रत्याह हे आलि सानन्दं वनमालिविलोकनाय श्रीकृष्णसन्दर्शनाय कुञ्जं लतापिहितप्रदेशं निर्गच्छ प्रयाहि। किं त्विति वक्ष्यमाणं विचारयेथाः विचारय। किन्तत्। झङ्कारिणः सशब्दाः मधुलिहो भ्रमराः दिवसे दिने भ्रमन्ति सञ्चरन्ति।

सानन्दमिति। आलि कृष्णदर्शनाय कुञ्जं गच्छेति वक्ष्यमाणं विचारयेथाः। तदाह सशब्दा भ्रमरा इह दिवा भ्रमन्ति। एवं च त्वद्वदनाभिनवसौरभलोभागतालिनिगदितैः सर्वोऽपि त्वां ज्ञास्यतीति भावः। रात्रौ तु चन्द्रिकास्वादचपलचञ्चुपुटाश्चकोरा भ्रमन्ति। एवं च त्वद्वदनचन्द्रिकाग्रामागतचकोरचञ्चुनिनदैस्तत्रापि स एव दोष इति भावः। अत्र समासोक्त्या मुखरदुर्जनानां दिवा भ्रमणेन दिवा गन्तुमशक्यम्। अत्र झङ्कारित्वेन सर्वत्र विज्ञातार्थावेदकत्वम्। मधुलिट्त्वेनोद्धतत्वं वक्तव्यविवेकविधुरत्वं च व्यज्यते। रात्रौ चपलचञ्चुपुटाः पिशुना रात्रिं रात्रिनिखिलजातवृत्तान्तावेदकाः चकोरा इव रात्रिव्यापारेण स्वोदरपूरका यामिका भ्रमन्ते। चौर्यादिबहुभयत्वाद्भ्रमणमनुचितम्। एवं च तथा गन्तव्यं यथा केनापि न ज्ञायतइति व्यज्यते। के चित्तु मधुलिट्चकोरशब्दाभ्यां गानाऽध्वरलोलुपतरुणप्रतीक्षा तद्रूपबाधकसत्त्वमित्याहुः॥ ९४॥

परिहासो यथा।

आगारभित्तिलिखितासु निवेदयस्व
कः सप्तमो दशसु मूर्तिषु लोकभर्तुः।
इत्थं सखीजनवचः प्रतिपद्य सद्यः
सीता स्मितद्युतिभिरुत्तरयाञ्चकार ॥ ९५ ॥

एवं च त्वद्वदनाऽभिनवसौरभलोलुपतया ऽऽगतो लिपटली-निनादैः कोपि त्वां ज्ञास्यतीति व्यज्यते। ननु रात्रावेव म-न्तव्यमत आह रात्रौ पुनश्चपलचञ्चुपुटाः। चपलानि चन्द्रि-कास्वादलम्पटानि चञ्चुपुटानि त्रोटिपुटानि येषां ते। च-ञ्चुस्त्रोटिरुभे समे इत्यमरः। चकोराः पक्षिविशेषाः। भ्र-मन्ति। एवं चापि त्वद्वदनाभिनवचन्द्रिकास्वादलम्पटानि चञ्चु-पुटानि येषां ते। चन्द्रिकापानायाऽऽगतचकोरचञ्चुनिनदैः यः कश्चन ज्ञास्यतीति तथा गन्तव्यं यथा न केनापि ज्ञायत-इति व्यज्यते। यद्वा झङ्कारिणो मुखराः मधुलिह इव मधु-लिहः दुर्जनाः। दिवसे भ्रमन्ति झङ्कारिपदेन विज्ञातमर्थं स-र्वत्रावेदयिष्यन्तीति द्योत्यते। मधुलिट्पदेन औद्धत्यं वक्तव्या-ऽवक्तव्ये विकटविधित्व पापभीरुत्वाऽभावश्च व्यज्यते। रात्रौ पुनः चपलचञ्चुपुटाः पिशुनाः रात्रिगतनिखिलवृत्तान्तावेदकाः चकोरा इव। चकोरा हि यथा रात्रिव्यापारेणैव स्वोदरपूर्तिं कुर्वन्ति तथा रात्रिव्यापारप्रवीणा यामिका इत्यर्थः। भ्रमन्ति।

आगारेति। अत्र लोकभर्तृत्वेन लज्जाहेत्वभावः। सखीजनत्वे-नाऽवश्योत्तरदानार्हता। अत्र हि तथाहसितेन मत्प्रियनामा ऽयमि-त्युच्चरितमिति भावः ॥ ९५ ॥

सख्याः परिहासवत् प्रियस्यापि परिहासः । यथा ।

भ्रूसंज्ञया ऽऽदिशसि तन्वि सखीं न वाग्भि-
रित्थं विहस्य मुरवैरिणि भाषमाणे ।
राधा चिराय दशनव्रणदूयमान-
विम्बाधरा वदनमानमयाञ्चकार ॥ ९६ ॥

एवं च दिवा रात्रावपि दुर्जनयामिकादिबहुभयवत्त्वाद् गमनमनुचितमित्यवगत्य यदीच्छसि गन्तुं तदा गच्छ सुखेनेत्यौदासीन्यमावेद्यते । केचित्तु मधुलिट्चकोरशब्दाभ्यां गानाऽधरपानलोलुपतरुणप्रतीत्या तद्रूपबाधकसत्त्वमित्यप्याहुः । वसन्ततिलकावृत्तम् ॥ ९४ ॥

परिहासमुदाहरति । आगारेति । का चित्कां चिदाह आगारभित्तिलिखितासु विविधपुटभेदनकुड्यविद्यमानासु लोकभर्तुर्विष्णोः । लोकभर्तृपदकथनेन लज्जाहेत्वभावं द्योतयति । दशसु मूर्तिषु मत्स्याद्यवतारेषु सप्तमो ऽवतारः कः किंसंज्ञक इत्यर्थः । इति निवेदयस्व कथय । तन्नामग्रहणं कुर्विति भावः । इत्थं पूर्वोक्तप्रकारं सखीजनवचः सखीसमूहवाक्यम् । जनपदमनिवारणीयतां व्यनक्ति । वच इत्येकवचनं सकलसख्यैकरूपता गमयति । सा चाऽवश्योत्तरदानार्हताम् । सद्यः शीघ्रम् । एवं च चातुर्यमभिव्यज्यते । प्रतिपद्य प्राप्य सीता स्मितद्युतिभिः हास्यदीप्तिभिः । एवं च लज्जावत्त्वमावेद्यते । उत्तरया-

भ्रूसंज्ञयेति । अत्र वागभावपूर्वकं भ्रूसंज्ञापनेनाऽधरदंशनज्ञानमावेद्यते । चिराय दशनव्रणदूयमानत्वेन वचनाऽसामर्थ्यम् । यद्वा चिरायेति नम्रीकरणे ऽन्वेति । लज्जावशादानम्रता । अत्र दशनदंशप्रदर्शनेन परिहासः ॥ ९६ ॥

प्रियस्य परिहासवत् प्रियाया अपि परिहासः । यथा ।

दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको
दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं स चाङ्गे तव ।
तस्माद् द्यूतविधौ त्वया ऽद्यमुषितो हारः परित्यज्यता-
मित्थं शैलभुवा विहस्य लपितः शम्भुः शिवायास्तु वः ९७

श्चकार उत्तरमाचख्यौ । एवं च तथाविधहृमितेनैव मतिभयत-मनामा ऽयमित्युत्तरमिति भावः । वसन्ततिलकावृत्तम् ॥ ९५ ॥

प्रसङ्गात्परिहासं प्रियस्योदाहरति भ्रूभङ्गयेति । हे तन्वि प्रियमर्त्त्वां वयस्यां भ्रूसंज्ञया कटाक्षविक्षेपेण आदिशसि उपकरणमामग्र्यमाज्ञापयसि । वाग्भिर्वचोभिः किमिति नादिशसीत्यम् अमुना प्रकारेण विहस्य । एवं चाऽधरदशनदंशाऽज्ञानमात्रं द्यते । मुरवैरिणि मुरारौ भाषमाणे वदति सति चिराय बहुकालं दशनव्रणदूयमानविम्बाऽधरा दशनक्षतक्लिश्यमानविम्वोष्ठी । एवं च वचनरचनाऽसामर्थ्यमभिव्यज्यते । राधा वदनं मुखम् आनमयाञ्चकार नम्रीचकार । लज्जावशादिति भावः । यद्वा चिराय वदनम् आनमयाञ्चकारेति योजना । अत्र दशनदंशप्रदर्शनेन परिहासः । वसन्ततिलकावृत्तम् ॥ ९६ ॥

दिव्यं वारीति । सुरधुनीमौलौ इत्यनेन स्नेहवत्तया तदभ्यासवत्तया वा जलदिव्यं वा न निर्णायकमिति भावः । दिव्यं शपथविशेषः । एवमग्निदिव्यञ्च न निर्णायकम् । तस्य नयनत्वेन त्वदभिमतविधाननिपुणत्वात् । अहर्निशमङ्गसङ्गितया भुजगस्य त्वदधीनत्वेन त्वदभीष्टसम्पादकत्वाच्च । एवं दिव्यादिविधानं परिहृत्य हारापहारं सिद्धवत्कृत्याह शैलभुवेत्यनेन कठिनहृदयत्वं तेन परिहासयोग्यता तेन च तर्जनताडनकरणप्रवणत्वं व्यज्यते । शम्भुत्वेन कल्पाणाकरणयोग्यता । द्यूतत्वेन चौर्यमिथ्यालापादियोग्यता ॥ ९७ ॥

दूत्यव्यापारपारङ्गमा दूती। तस्याः संघट्टनाविरहनिवेदनादीनि कर्माणि।

प्रियपरिहासप्रसङ्गात् प्रियापरिहासमुदाहरति दिव्यमिति। पार्वती शिवं प्रत्याह हे शम्भो। यत् यस्मात् मौलौ मस्तके। एवं चातिशयप्रेमाऽऽवेद्यते तेन च साहाय्यकारित्वम्। सुरधुनी मन्दाकिनी। एवं चाऽन्यथाविधानसामर्थ्यं द्योत्यते। यतः वारि जलं दिव्यं शपथविशेषः। कथं, न युक्तमित्यर्थः। तथा पावको वह्निः दिव्यं कथं यतस्त्वद्विलोचनं विलोचयति तन्नयनम्। एवं च त्वदभिमतविधाननिपुण एवाऽयमनल इति व्यज्यते। तथा अहिः सर्पः कथं दिव्यं यतः स चाऽहिस्त्वाङ्गे देहे। एवं चाऽहर्निशाऽङ्गसङ्गशालिनो भुजङ्गस्य त्वदधीनतया त्वदभीष्टसम्पादकत्वमेवेति ध्वन्यते। एवं दिव्यादिविधानं परिहृत्य हाराऽपहारं सिद्धवत्कृत्याह तस्माद्धेतोः अत्र द्यूतविधौ द्यूतप्रसङ्गे। एवं च चौर्यमिथ्याभिलापादि नियतमिति व्यज्यते। मुषितश्चोरितः हारो मुक्ताभूषणम् परित्यज्यताम्। एवं च दैन्याऽभावो द्योत्यते तेन च स्वस्मिन्नाधिक्यम्। इत्थममुना प्रकारेण शैलभुवा पार्वत्या। एवं च काठिनाऽवयवत्वं द्योत्यते तेन च तर्जनताडनकरणप्रवणत्वं च। विहस्येति परिहासो व्यज्यते। लपित उक्तः शम्भुः शङ्करः। एवं च कल्याणकरणं सुकरमिति व्यज्यते। वो भवतां शिवाय कल्याणायाऽस्तु। अत एव पार्वतीकृतस्मितपरिहासतया भयविहीनस्य कल्याणकरमुचितमिति ध्वन्यते। शार्दूलविक्रीडित वृत्तम्॥ ९७॥

प्रसङ्गाद् दूतीं निरूपयति दूत्येति। दूत्ये रचनाविषये विशेषनैपुण्यवतीत्यर्थः।

संघट्टनं यथा।

अञ्चति रजनिरुदञ्चति
तिमिरमिदं चञ्चति मनोभूः।
उक्तं न त्यज युक्तं
विरचय रक्तं मनस्तस्मिन् ॥ ९८ ॥

प्रसङ्गाद् दूतीं निरूपयति। दूत्येति। दूतस्य कर्म दूत्यम्। दूतवणिग्भ्यां चेति यत्। तस्य व्यापारो रचनाविशेषः तस्य पारङ्गमा तद्विषये नैपुण्यवती। सा किं क्रियावतीत्याह तस्या इति।

प्रथमोद्दिष्टत्वात् सङ्घट्टनमुदाहरति। अञ्चतीति। काचिद् दूती नायिकां प्रत्याह हे सखि। एवं च हितोपदेशार्हत्वं द्योत्यते। रजनी रात्रिः अञ्चति समायाति। किं च मितिरं तमिस्रम् उदञ्चति प्रकटीभवति। एवं च गमनयोग्यता। अगमने भयं दर्शयति। मनोभूर्मदनः। तेन अनिवारणीयत्वं द्योत्यते। अञ्चति हृष्यति। विजयसाधनसिद्धयेति भावः। अगमने शितशरस्त्वां ताडयिष्यतीति ध्वन्यते। अगमने प्रतिज्ञाहानिरूप

अञ्चतीति। समायातीत्यर्थः। उदञ्चति प्रकटीभवति। अनेन गमनयोग्यता। अगमने बाधकमाह। च परं मनोभूः तेनाऽनिवारणीयता। चञ्चति हृष्यति। विजयसाधनसिद्ध्येति भावः। एवं चाऽगमने विषमशरस्त्वां शरैस्ताडयिष्यति इति व्यज्यते। उक्तं प्रतिज्ञातम्। अर्थान्नायकसंविधगमनं न त्याज्यं। एवञ्चाऽगमने प्रतिज्ञाभङ्गरूपं महद्बाधकमिति भावः। कर्तव्यमाह। तस्मिन्निति। दूतीति पाठे नायकोक्तिरियम्। हे दूति रजन्याद्युदञ्चति। अतस्तद्वशीकरणे निपुणं यदुक्तं मदग्रे प्रतिज्ञातं तन्नत्यज। सर्वं स्मृत्वाऽनुतिष्ठेत्यर्थः। ननु अस्मृतं च त्यक्ष्यामि तत्राह तस्मिन् उक्ते मनः रक्तमासक्तं विरचय। तेन तदनुसन्धानपूर्वकमेव गच्छ येन विस्मरणं न भवतीत्यर्थः। ॥ ९८ ॥

विरहनिवेदनं यथा ।

चक्रे चन्द्रमुखी प्रदीपकलिका धात्रा धरामण्डले
तस्या दैववशाद्दशा ऽपि चरमा प्रायः समुन्मीलति ।

बाधकमाह उक्तं प्रतिज्ञातम् अर्थान्नायकमन्दिरे गमनं न त्यज । एवं च स्वाचनपरित्यागादन्यत् किमपि बाधकं नास्तीति द्योत्यते । यत्कर्तव्यं तदाह तस्मिन्नायके मनः रक्तमनुरागि रचय । इदं युक्तम् । दूतीति पाठे नायिकोक्तिरियं हे दूति रजनिः प्रशमं प्राप्नोति । इदानीमिरमुदञ्चति उद्गच्छति । मनोभूः चञ्चति नृत्यति हर्षादिति भावः । तावता किमित्यत आह युक्तं तद्वशीकरणे निपुणं यदुक्तं मदग्रे प्रतिज्ञातं तन्न त्यज तन्मध्यतः किमपि मा मुञ्चेत्यर्थः । स्मृतेन न सक्ष्यसि किं तु विस्मरिष्यसीत्यत आह तस्मिन् उक्ते मनः रक्तम् आसक्तं विरचय । अन्यथोपेक्षया विस्मरिष्यसीति गुणनिकां कुर्वन्ती गच्छेत्यर्थः । उपगीतिर्वृत्तम् ॥ ९८ ॥

विरहनिवेदनमुदाहरति चक्रइति । का चिद् दूती श्रीकृष्णं प्रत्याह भो कृष्ण चन्द्रमुखी । एत्र च प्रकाशकारित्वं व्यज्यते । राधा गोपिका धरामण्डले प्रदीपकलिका चक्रे कृता धात्रा विधात्रा । कर्मणि लिट् । किं तावतेत्याह दैववशादद्दृष्टयोगात् । एवं च तव नाऽपराध इति व्यज्यते । तस्या राधायाः चरमापि अन्त्यापि दशा ऽवस्था प्रायः बाहुल्येन

चक्रइति । का चिद् दूती कृष्णं प्रत्याह । हे कृष्ण सा चन्द्रमुखी धात्रा भूमण्डले प्रदीपकलिका चक्रे । अनेन रमणीयताऽतिशय । तस्याश्च दैववशात् । एवं च तवाऽनपराध इति भावः । चरमापि दशा

तद् ब्रूमः शिरसा नतेन सहसा श्रीकृष्ण निक्षिप्यतां
स्नेहस्तत्र तथा यथा न भवति त्रैलोक्यमन्धं तमः॥ ९९॥

इति नायिकानिरूपणम् ॥

समुन्मीलति समुदेति । तेन नम्रेण शिरसा प्रणामपुरःसरमित्यर्थः । वयं ब्रूमः । तेन विज्ञापनाफलसंपादनौचित्यं व्यज्यते । तत्किमित्यत आह श्रीकृष्ण सहसा । शरत्कालीनवृष्टिरिवाऽऽकस्मिक इत्यर्थः । तत्र राधालक्षणदीपकलिकायां स्नेहः प्रेम निक्षिप्यतामासज्यताम् । यथा च एतत् त्रैलोक्यं चातुर्वर्ण्यादिवत् व्यञ्ज् । अन्धं लावण्यसारसंसाराऽदर्शक न भवति । एवं च त्वत्कृपया विना राधारूपदीपनिर्वाणे सति न कोपि कुत्रापि सौन्दर्यं पश्येत् एवं च त्रिभुवनाऽभिरामा राधाऽवश्यं त्वत्प्रसादं विना न जीविष्यतीति व्यज्यते । अन्यत्रापि दीपदशा निर्वाणं यान्ती स्नेहेन सहिना प्रकाशयते इति लौकिकम् । शार्दूलविक्रीडितं वृत्तम् ॥ ९९ ॥

इति श्रीमदनन्तपण्डितविरचितायां व्यङ्ग्यार्थकौमुद्यां
नायिकानिरूपणम् ॥

समुन्मीलति तत्तनो हेतोर्ब्रूम । बहुवचनेन विज्ञापनाफलसम्पादनौचिती व्यज्यते । नतेन शिरसा प्रणामपुरःसरमित्यर्थः । सहसा तत्कालमेव अन्धं लावण्यसारसंसाराऽदर्शकं तमस्तद्रूपं यथा न भवति तथा कुरु इत्यर्थः । एवं च त्रिभुवनाऽभिरामा सा त्वत्प्रसादं विना न जीविष्यतीति व्यज्यते । अन्यापि दीपदशा निर्वाणं यान्ती स्नेहेन प्रकाश्यतइति लौकिकम् ॥ ९९ ॥

इति नायिकानिरूपणम् ॥

शृङ्गारस्योभयनिरूप्यत्वान्नायको ऽपि निरूप्यते । स च त्रिविधः पति,रुपपति,र्वैशिकश्चेति ।

विधिवत्पाणिग्राहकः पतिः । यथा ।

त्वं पीयूषमयूख मुञ्च शिशिरस्निग्धान् सुधाशीकरान्
त्वं भोगीन्द्र विलम्बसे किमु फणाऽऽभोगैः शनैर्वीजय।

नायकनिरूपणे उपोद्घातसङ्गतिं दर्शयति शृङ्गारस्येति । उभयनिरूप्यत्वात् नायिकानायकोभयनिरूपणाधीननिरूपण-त्वादित्यर्थः । यद्यपि कारणतावच्छेदकाऽवच्छिन्नं य-त्कारणनिरूपणे ऽपि कार्यनिरूपणं भवत्येवेत्यतस्तन्निरूपणम-नर्थकं तथापीह यथा नायकीयशृङ्गारालम्बनविभावत्वेन ना-यिकानिरूपणं तथा नायिकीयशृङ्गारालम्बनत्वेन नायकनि-रूपणमित्येतन्निरूपणमर्थवत् । तद्विभागमाह स चेत्यादिना । तत्र प्रथमोद्दिष्टत्वात् पतिं लक्षयति विधिवदिति । विधिवत्पा-णिग्रहणकर्तृत्वम् । विधिपदोपादानादविधिमत्तत्कर्तृके नाऽति-व्याप्तिः । वस्तुतस्तु तत्प्रतियोगिकतया पाणिग्रहणस्य भिन्न-त्वान्नैकं पतित्वम् ।

पतिमुदाहरति त्वं पीयूषेति । शिवोक्तिरियम् । हे पीयूषमयूख अमृतकिरण चन्द्र । शिशिरान् शी-तलान् स्निग्धान् सान्द्रान् सुधाशीकरान् अमृतलवान् मुञ्च

नायकनिरूपणे उपोद्घातसङ्गतिमाह शृङ्गारस्येति । उभयनिरूप्य-त्वात् । उभयनिरूपणाधीननिरूपणविषयत्वादित्यर्थः । नायकीयशृ-ङ्गारालम्बननायकनिरूपणमिति भावः । वस्तुतस्तु तत्प्रतियोगिक-पाणिग्रहस्य भिन्नत्वात् नैकं पतित्वमिति बोध्यम् ।

त्वं पीयूषमयूखेति । पीयूषममृतम् । शिशिरस्निग्धान् शीतल-सान्द्रान् । स्निग्धं तु मसृणं सान्द्रमिति महार्णवः । सुधाशीकरान्

त्वं स्वर्वाहिनि किं च सिञ्च सलिलैरङ्गैः शिरीषोपमैः
सेयं शैलसुता कठोरमहसः कान्त्या पथि क्लाम्यति॥ १००॥

अनुकूलदक्षिणधृष्टशठभेदात्पतिश्चतुर्धा !

सार्वकालिकपराङ्गनापराङ्मुखत्वे सति सर्वकालमनुरक्तो ऽनुकूलः। यथा।

विसृज। अर्थाच्छैलसुताशरीरे। हे भोगीन्द्र भुजगराज त्वं किमु विलम्बसे किं विलम्बं कुरुषे। एवं च विलम्बो न विधेय इति व्यज्यते। इदं सर्वत्रान्वेति। फणाभोगैः फणाविस्तारैः शनैर्मन्दं वीजय व्यजनानिलं संपादय। भो स्वर्गवाहिनि सलिलैः पथि मार्गे सिञ्च सेकं कुरु। स्वर्वाहिनीपदं भूतले सलिलसेककरणसौकर्यमभिव्यञ्जयति। एवं च चन्द्रस्वर्गङ्गाभ्यर्थनाफलयोरेकत्वेन न कोपि विशेष इति परास्तम्। किमर्थमुपदेश इत्यत आह सेयं सकलजनविदितप्रभावा शैलसुता पर्वतपुत्री कठोरमहसः चण्डरश्मेः कान्त्या दीप्त्या क्लाम्यति ग्लायति। ननु पर्वतपुत्र्याः कथं चण्डरश्मिकान्त्या क्लान्तिरत आह शिरीषोपमैः शिरीषपत्रकोमलैः अङ्गैर्गात्रैः। उपलक्षिता। एवं च पर्वतपुत्रीत्वेन कठिनत्व नाशङ्क्यम्। च-

सुधाकणान् सिञ्चेति। मार्गमिति शेषः। स्वर्वाहिनीत्वेन भुवि सेककरणसौकर्यं व्यज्यते। सेयं सकलजनविदितसौकुमार्या। अत्र शैलसुतेत्यनुचितम्। यद्वा सार्वकालिकहिमाऽभ्यासवत्तयोष्णस्य दुःसहत्वं व्यज्यते। कान्तिर्दीप्तिः॥ १००॥

सार्वकालिकेति। दक्षिणे ऽतिव्याप्तिवारणाय सत्यन्तम्। तादृशि विधिवत्पाणिग्राहके रूपादिहीनतया नायिकायामननुरागिण्यतिव्याप्तिवारणाय विशेष्यदलम्।

पृथ्वि त्वं भव कोमला दिनमणे त्वं शैत्यमङ्गीकुरु
त्वं वर्त्मन् लघुतां प्रयाहि पवन त्वं खेदमुत्सारय ।
सान्निध्यं श्रय दण्डकावन गिरे निर्गच्छ मार्गाद्बहिः
सीता ऽसौ विपिनं मया सह यतो निर्गन्तुमुत्कण्ठते ॥ १०१॥

न्द्रादित्रयस्य स्वाधीनत्वेनाव्याप्त्यासङ्गपरिहारपुरःसरमेतद्विधेय-मित्याज्ञाऽर्हत्वम् । शार्दूलविक्रीडितं वृत्तम् ॥ १०० ॥

पतिं विभजते । अनुकूलेत्यादि । तत्राऽनुकूलं लक्षयति सार्वकालिकेति । सर्वकाले भवं सार्वकालिकम् । दक्षिणे ऽतिव्याप्तिपरिहाराय सप्तन्तम् ।

अनुकूलमुदाहरति पृथ्वीति । विमलकमलदलाङ्ग्याः कामिन्याः श्रमसम्भावनया सदयहृदयो विपिनगमनावसरे श्रीरामः पृथ्व्यादीन् प्रार्थयते हे पृथ्वि पृथोः राज्ञ इयं तत्सम्बोधनं हे वसुमति । एवं च महत्सम्बोधिततया प्रार्थनासम्पादनाप्रवणत्वं व्यज्यते । त्वं कोमला भव । एवं च पृथिव्यास्तज्जननीत्वे ऽपि स्वयं तथाविधप्रार्थनाकरणेनाऽतिशयितप्रेमाऽऽवेद्यते । किं च दिनमणे त्वं शैत्यं शीतलतामङ्गीकुरु । मणिपदं तत्करणसमर्थतां व्यनक्ति । एवं च स्वस्य सूर्यवंशतया प्रार्थनौचित्य तस्य तत्संपादनौचित्यं

पृथ्वीति । अतिसुकुमारप्रियाश्रमसम्भावनया गमनावसरे पृथ्व्यादीन्प्रार्थयते । पृथ्व्यास्तज्जननीत्वे ऽपि स्वयं प्रार्थनाकरणेनाऽतिशयित प्रेमाऽभिव्यज्यते । दिनमणे इति मणित्वेन तत्करणसमर्थता स्वस्य सूर्यवंशत्वेन प्रार्थनौचित्यं व्यज्यते । वर्त्मन् मार्ग लघुतामल्पताम् । खेदं श्रमम् । हे दण्डक दण्डका वनविशेषस्य संज्ञा । क्वचित्तु दण्डकावनेति पाठः । तत्र घनान्तं सम्बोधनम्? ॥ १०१ ॥

सकलनायिकाविषयकसमसहजाऽनुरागो दक्षिणः । यथा।

एतत्पुरः स्फुरति पद्मदृशां सहस्र-
मक्षिद्वयं कथय कुत्र निवेशयामि ।
इत्याकलय्य नयनाम्बुरुहे निमील्य
रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥ १०२ ॥

द्योत्यते । हे वर्त्मन् मार्ग लघुतामल्पतां मयाहि प्राप्नुहि । हे पवनं त्वं खेद श्रमम् उत्सारय निवारय । किं च दण्डकावन दण्डकारण्य दण्डकया राक्षस्या ऽधिष्ठितं वन दण्डकावनम् । तत्सम्बोधनम् । सांनिध्यं नैकट्यमङ्गीकुरु । गिरे पर्वत मार्गाद्बहिः दूरे निर्गच्छ । केचित्तु दण्डकावनगिरे दण्डकारण्यसम्बन्धिपर्वत सान्निध्यं श्रय मार्गाद्बहिर्निर्गच्छेत्याहुः । किमर्थमिदमत आह यतो हेतोः इयं सीता मया सह वन गन्तुमुत्कण्ठते वाञ्छतीत्यर्थः । शार्दूलविक्रीडित वृत्तम् ॥ १०१ ॥

दक्षिणं लक्षयति । सकलेति । अशेषनायिकाविशेषाऽन्यूनाऽनधिकाऽकृत्रिमाऽनुरागवत्त्वमित्यर्थः । अन्यूनाऽनधिकपदो-

सकलेति । समः अन्यूनाऽधिक । सहजः अकृत्रिम इति कार्यानुरूपनायिकाऽनुरागवच्चतुरव्युदासाय । कृत्रिमाऽनुरागवच्छठनिरासाय सहजेति ।

एतत्पुर इति । एतां किं नावलोकयसीति वादिनं कञ्चित्कृष्ण आह । पुर अग्रे स्फुरतीत्यनेनाऽतिशयितसौन्दर्यं व्यज्यते । इत्याकलय्योक्त्वेत्यर्थः । अम्बुरुहत्वेनानन्दाश्रुवत्त्वा ऽऽवेद्यते । वपुषा करणेन रोमाञ्चितेनाऽच्युतेन स्थितमित्यन्वय । यद्वा रोमाञ्चितेन वपुषोपलक्षितेनाऽच्युतेन स्थितमित्यन्वयः । यत्तु अत्र रतेरेकत्राऽपर्याप्त्या र-

भूयो निःशङ्कृतदोषोपि भूयो निवारितोपि भूयः प्रश्रयपरायणो धृष्टः । यथा ।

पादानात्कार्याऽनुरूपन्यूनाऽधिकाऽनुरागशालिचतुरव्युदासः । अकृत्रिमपदेन च कृत्रिमाऽनुरागिशठनिरासः ।

दक्षिणमुदाहरति एतदिति कृष्णोक्तिरियम् । हे सखे पद्मदृशां कमलनयनानाम् एतत्सहस्रं पुरोऽग्रे स्फुरति । सहस्रसङ्ख्याकाः कामिन्यः पुरतः स्फुरन्तीत्यर्थः । स्फुरन्तीत्यनेन कान्तिविशेषशालिता व्यज्यते । अतोऽक्षिद्वयं नयनयुगलं कुत्र निवेशयामि इत्याकलय्य विचार्य कथय । अत्र च नायिकानां बहुलत्वात् नयनयोश्चाऽबहुत्वात् कथं निवेशनमिति भावः । इत्युक्त्वा नयनाम्बुरुहे नयनकमले निमील्य वपुषा देहेन करणेन रोमाञ्चितेन सञ्जातरोमोद्गमेन अच्युतेन स्थितम् । वसन्ततिलका वृत्तम् ॥ १०२ ॥

साभासत्वमिति नञ । नायिकाया बहुनायकविषयकरतेराभासत्ववत् नायकस्य बहुनायिकाविषयकरतेराभासत्वं मानाऽभावात् । न चाऽनेकनायिकाविषयाया धर्मशास्त्रनिषिद्धत्वेन तथात्वमिति वाच्यम् । अनेकस्य तथाऽप्रयोजकत्वात् । कामशास्त्रादिविरुद्धरतेरेवाभासत्वप्रयोजकत्वाच्च । अत्रोदाहरणे नायिकासु परकीयात्वप्रतिपादकाभावाच्च । मुनिगुरुपत्नीगतायाचाभासत्वमिति भरतसूत्रे उक्तत्वेन नायिकाविशेषविषयकरतेरतथात्वेन दोषलेशाऽभावाच्च । अत्राहुः । मीलनहेतुर्ध्यानसन्धानसत्त्वात् विगलितवेद्यान्तरत्वाऽभावेन नास्य सरसतेति ॥ १०२ ॥

भूयो निःशङ्केति । बहुतरनिर्भयाऽपराधजनकत्वे सति बहुनरतिरस्काराऽगणकत्वे सति विनयपरायणत्वमित्यर्थः । निर्भयपदेन शठव्युदासः । सत्यन्तेन विशेषणाऽभावप्रयुक्तविशिष्टाभावपरतया तन्निरास इत्याहु । द्वितीयसत्यन्तेन मानिनायिकव्युदासः ।

बद्धो हारैः करकमलयोर्द्वारतो वारितोपि
स्वापं ज्ञात्वा पुनरुपगतो दूरतो दत्तदृष्टिः ।
तल्पोपान्ते कनकवलयं मुक्तमन्वेषयन्त्या
दृष्टो धृष्टः पुनरपि मया पार्श्वएव प्रसुप्तः ॥ १०३ ॥

धृष्टं लक्षयति भूय इत्यादि । बहुतरनिर्भयाऽपराधजनकत्वे सति बहुतरतिरस्काराऽगणकत्वे सति विनयपरायणत्वमित्यर्थः । सत्यन्तेन विशेषणाऽभावप्रयुक्तविशिष्टाऽभावतया शठनिरासः । द्वितीयसत्यन्तेन मानिनायकव्युदासः ।

धृष्टमुदाहरति बद्ध इति । का चिन्नायिका सखीं प्रत्याह द्वारतो देहलीतः वारितोपि तिरस्कृतोपि अर्थात्परिजनैः । किं च हारैः पुष्पमालाभिः करकमलयोर्हस्तपद्मयोर्बद्धोपि स्वापं निद्राम् अर्थान्मम ज्ञात्वा सम्भाव्य दूरतो व्यवहितप्रदेशाद् दत्तदृष्टिः मदिङ्गितज्ञानायेति भावः । पुनरुपगतः पुनरागतः । ततोपि तल्पान्ते शयनीयप्रान्ते मुक्तं स्थापितं रात्रौ नाऽलंकृतं सुवर्णवलयं कनककटकम् अन्वेषयन्त्या मया पार्श्वे पृष्ठभागे एकदा स्वापान्निवारितोपि सुप्त एव धृष्टो निःशङ्को दृष्टः । वसन्ततिलका वृत्तम् ॥ १०३ ॥

द्वारतो वारतोपि परिजनैरिति शेषः । ज्ञात्वा सम्भाव्य मदिङ्गितज्ञानाय दूरतः व्यवहिते दत्तदृष्टिः । मुक्तं तावतोपि तस्य पापीयसो विरहेण कार्श्यात् गलितम् । यद्वा नालङ्कृतं स्वप्नादित्यागमनात्त्यक्तम् । यद्वा विरहेणाऽसह्यत्वान्मुक्तमन्वेषयन्त्या स्थलविस्मरणात्तद्दर्शनाद्वा तदन्वेषणम् । अत्र करादिबन्धेनाऽनयकारित्वं द्योत्यते । निवारितविनयपरायणत्वे स्फुटे एव ॥ १०३ ॥

कामिनीविषयककपटपटुः शठः। यथा।

मौलौ दाम विधाय भालफलके व्यालिख्य पत्रावलीं
केयूरं भुजयोर्निधाय कुचयोर्विन्यस्य मुक्तास्रजम्।
विश्वासं समुपार्जयन्मृगदृशः काञ्चीनिवेशच्छलात्
नीवीग्रन्थिमपाकरोति मृदुना हस्तेन वामभ्रुवः॥ १०४॥

शठं लक्षयति कामिनीति। सापराधत्वे ऽपि वञ्चनानिपुणत्वमित्यर्थः।

शठमुदाहरति मौलाविति। मस्तके दाम मालां विधाय कृत्वा भालफलके कपोलतले पत्रावलीं मकरिकादिरचनां व्यालिख्य भुजयोः केयूरं भूषणे निधायाऽऽसज्य कुचयोर्मुक्तास्रजं विन्यस्य मृगदृशो मृगदृक्पद मामयं वञ्चयिष्यतीति तत्क्रियाऽवधानमभिव्यञ्जयति। विश्वासं समुपार्जयन्नुत्पादयन् काञ्चीनिवेशच्छलात् रशनास्थापनव्याजात् मृदुना हस्तेन शनैरित्यर्थः। वामभ्रुवः कुटिलभ्रुवः। एवं च वचनाऽयोग्यत्वं द्योत्यते। एतेन मृगदृश इत्यनेनैव चारितार्थ्येऽपि वामभ्रुव इत्यनर्थकमित्यपास्तम्। नीवीग्रन्थिमपाकरोति। रिरंसयेति भावः। शठत्वं चाऽत्र स्फुटमेव। शार्दूलविक्रीडितं वृत्तम्॥ १०४॥

कामिनीति। सापराधत्वे सति वञ्चनानिपुणत्वमित्यर्थः।

मौलाविति। दाम मालाम्। भालफलकत्वेन विशालता। तया लिखनयोग्यता। मृगदृशः मृगयतीति व्युत्पत्त्या तत्क्रियाऽवधानमनेन व्यज्यते। वामभ्रुवः वक्रभ्रुवः। तेन वञ्चनायोग्यत्वं व्यज्यते। एतेन मृगदृश इति सिद्धे वामभ्रुव इति व्यर्थमित्यपास्तम्। शठत्वं चाऽत्र स्फुटम्॥ १०४॥

आचारहानिहेतुः पतिरुपपतिः । यथा ।

शङ्काशृङ्खलितेन यत्र नयनप्रान्तेन न प्रेक्ष्यते
केयूरध्वनिभूरिभीतिचकितं नो यत्र वाऽऽश्लिष्यते ।
नो वा यत्र शनैरलग्नदशनं बिम्बाधरः पीयते
नो वा यत्र विधीयते च मणितं तत्किं रतं कामिनोः ॥ १०५ ॥

उपपतिं लक्षयति आचारेति । तमुदाहरति शङ्केत्यादि । यत्र रते शङ्काशृङ्खलितेन शङ्कया भयेन शृङ्खलितं निवद्धं तेन नयनप्रान्तेन नेत्रप्रान्तेन न प्रेक्ष्यते । शृङ्खलितपदेन प्रसरणाऽभावो द्योत्यते । यत्र वा केयूरध्वनिभूरिभीतिचकित केयूरं वाहुभूषणं तस्य ध्वनिर्निनादः तेन भूरिभीतिः वहुतरभयं तेन चकितं निश्चलं नाऽऽश्लिष्यते नाऽऽलिङ्ग्यते । यत्र वा अलग्नदशनं दन्तसम्बन्धं विना दन्तक्षते जाते कैश्चिद्विज्ञातव्यमेतदिति धियेति भावः । अत एव शनैर्मन्दं बिम्बाधरो विम्वतुल्याधरोष्ठः । विम्वपदमाकारविशेषं व्यनक्ति । न पीयते यत्रैतादृशं चुम्वनं नेत्यर्थः । यत्र वा मणितं रतिकूजितं न विधीयते न श्रुतिविषयीक्रियते सर्वमेतत्प्रच्छन्नकामित्वात् । कामिनोः स्त्रीपुंसोश्च परस्पराऽनुरक्तत्वं व्यज्यते । तत्किं रतम् । तत्किं

शङ्केति । यत्र रते भयशृङ्खलितेन नयनप्रान्तेन न प्रेक्ष्यते शृङ्खलितत्वेन प्रसरणाऽभावो व्यज्यते । यत्र च केयूरनादकृतवहुभयेन कृत्वा चकितम् आकस्मिकं नाश्लिष्यते भयस्य चकिताश्लेषाभावे हेतुत्वम् । यत्र च शनैर्न लग्ना अपि किं तु दृढ लग्ना दशना यत्र क्रियायां यथा भवति तथा विम्बाधरो न पीयते । किं च यत्र मणितं रतिकूजितमपि न विधीयते न श्रुतिविषयीक्रियते । क्वचित्तु निधीयते। सर्वमेतत्प्रच्छन्नकामित्वात् । तत्किं रतम् । आचारविनाशकत्वं स्फुटमेव । अत्रैतादृशप्रतिसन्धानत्वाद्विगलितवेद्यान्तरत्वाऽभावात्कथं रसपोष इति विभाव्यमिति केचित् ॥ १०५ ॥

उपपतिरपि चतुर्द्धा। परं तु शठत्वं तत्र नियतम्।
अनियताः परे। बहुलवेश्योपभोगरसिको वैशिकः। यथा।
काञ्चीकलक्कणितकोमलनाभिकान्ति
पारावतध्वनितचित्रितकण्ठपालिम्।

सम्भोगः यत्रेतादृशचेष्टिताऽभाव इत्यर्थः। आचारविनाशकत्वं स्फुटमेव। अत्रैतादृशप्रतिसन्धानसत्त्वाद्विगलितवेद्यान्तरत्वाऽभावात्कथं रसपरिपोष इति विभावनीयम्। शार्दूलविक्रीडितं वृत्तम्॥ १०५॥

उपपतिरप्युक्तभेदैरनेकविध इत्याह उपपतिरपीति। अनुकूलादिभेदेनेत्यर्थः। नन्वनुकूलत्वस्य पतिधर्मत्वेनोपपतिधर्मत्वं कथमिति चेत्। अत्र पराङ्गनापदेन तदितरकामिनीमात्रमभिधीयते। यद्वाऽत्र शठत्वव्याप्यमेवानुकूलत्वमिति न कश्चिद्दोषः। वैशिकं लक्षयति बहुलेत्यादि।

वैशिकमुदाहरति काञ्चीति। कोपि नायकोऽनिर्वचनीयगुणस्तादृशं सखायं प्रत्याह हे सखे काञ्चीकलक्कणितकोमलनाभिकान्ति काञ्च्या रशनायाः कलं मधुराऽस्फुटं तादृशं क्वणितं शिञ्जितं यस्मिन्स चासौ कोमलोऽभि-

चतुर्धेति। अनुकूलादिभेदेनेत्यर्थः। ननु सार्वकालिकपराङ्गनाविमुखत्वघटितस्याऽनुकूलत्वस्य कथमुपपतौ सम्भव इति चेत्। पराङ्गनापदेन तदितरकामिनीमात्राऽभिधानात्। शठत्वव्याप्यमेवाऽनुकूलत्वमित्याहुः।

काञ्चीति। काञ्चीमधुरशब्दैः कोमला नाभिकान्तिर्यस्मिंस्तम्। यद्वा काञ्चीमधुरशब्दवच्च तत्कोमलनाभिशोभायुतम्। स्फुटदृश्यमाननाभित्वादिति भावः। पारावतध्वनितैः तत्सदृशध्वनितैर्विचित्रिता नानात्वं प्रापिता कण्ठपालिर्यत्र तम्। तारमन्द्रकलादिविचि-

उद्भ्रान्तलोचनचकोरमनङ्गरङ्ग-
माशास्महे कमपि वारविलासवत्याः ॥ १०६ ॥

वैशिकस्तूत्तममध्यमाऽधमभेदात्त्रिधा ।

दयिताया भूयः प्रकोपे ऽप्युपचारपरायण उत्तमः। यथा।

नवो यो नाभिस्तस्य कान्तिर्लावण्यम् यस्मिन् सः तम् । पारावतध्वनितचित्रितकण्ठपालिम् । पारावतानां गृहकपोतानां यद्धनितं शब्दित तद्वद्विचित्रता नानाविधा कण्ठपाली यत्र स तम् । विविधमणितचातुर्यादिति भावः । पालीपद रमणीयतां गमयति । उभयत्र स्त्रीलिङ्गनिर्देशेनाऽहेयत्वं द्योत्यते । उद्भ्रान्तौ मुखचन्द्रचन्द्रिकापानार्थं चञ्चलौ लोचनचकोरौ यस्मिन् स तम् । उद्भ्रान्तपदं लज्जाऽभावं व्यञ्जयति । एतादृशं वारविलासवत्याः वाराङ्गनायाः कमपि अभिरूपम् अनङ्गरङ्ग कामक्रीडाप्रसङ्गमाशास्महे । स एवाऽस्माकमस्त्विति सम्भावयामः । वसन्ततिलका वृत्तम् ॥ १०६ ॥

प्रासाऽत्रसङ्गत्वाद् वैशिक विभजते । वैशिकेति । वस्तुतस्तु ललितशान्तोद्धतानां प्रत्येकमनुकूलादिभेदेन षोडशत्वेपि उत्तममध्यमाऽधमभेदैरष्टचत्वारिंशन्नायकभेदाः । अन्येऽपि बहवस्तेपि स्वयमूह्याः ।

धमणितचातुर्यादिति भाव. । पालित्वेन रमणीयता । मुखचन्द्रचन्द्रिकापानार्थं चञ्चललोचनचकोरम् । उद्भ्रान्तत्वादिभिर्लज्जाभावः । अनङ्गरङ्गं सुरत कमप्यन्याङ्गनारतादतिसौभाग्यशालिनमाशास्महे प्रार्थयामहे ॥ १०६ ॥

वैशिकश्चेति । ललितशान्तोद्धतानां प्रत्येकमनुकूलादिभेदेन षोडशत्वे ऽप्युत्तममध्यमाऽधमभेदेनाऽष्टचत्वारिंशन्नायकभेदाः । अन्ये ऽपि स्वयमूह्याः ।

चक्षुःप्रान्तमुदीक्ष्य पक्ष्मलदृशः शोणाऽरविन्दश्रियं
नोच्चैर्जल्पति न स्मितं वितनुते गृह्णाति वीटीं न वा ।
तल्पोपान्तमुपेत्य किं तु पुलकभ्राजत्कपोलद्युतिः
कान्तः केवलमानतेन शिरसा मुक्तास्रजं गुम्फति॥ १०७॥

प्रियायाः प्रकोपमनुरागं वा न प्रकटयति, चेष्टया मनोभावं गृह्णाति स मध्यमः । यथा ।

उत्तममुदाहरति चक्षुःप्रान्तमिति । का चित्कांचिदाह पक्ष्मलदृशः प्रशस्तानि पक्ष्माणि यस्याः । तादृशी दृग्यस्या नायिकायाः चक्षुःप्रान्तं नयनकोणं शोणारविन्दश्रियं रक्तोत्पलप्रायम् । कोपवशादिति भावः । उद्वीक्ष्य विलोक्य उच्चैर्न जल्पति शनैरेव वदतीति भावः । किं च स्मितं न तु हसितानि न वितनुते । किं च वीटीं ताम्बूलपर्णावलीं न गृह्णाति किं तु तल्पोपान्तं शयनीयसमीपदेशमुपेत्य पुलकभ्राजत्कपोलद्युतिः पुलकैः रोमाञ्चैः शयनसमीपदेशप्राप्तिजन्यहर्षोदयादिति भावः । भ्राजन्ती विलसन्ती कपोलद्युतिर्गण्डलावण्यं यस्य सः कान्तः केवलमेव आनतेन नम्रेण भयाच्चिन्तया चेति भावः । शिरसा मस्तकेन उपलक्षितः मुक्तास्रजं गुम्फति । तत्प्रीतये इति भावः ॥ १०७ ॥

चक्षुःप्रान्तमिति । शोणारविन्दश्रीस्तत्कोपवशात् । नोच्चैरिति । शनैस्तु वदत्येवेति भावः । वीटी ताम्बूलकवलं शयनसमीपदेशप्राप्तिजन्यहर्षवशात् भ्राजन्ती कपोलद्युतिः तल्लावण्यं यस्य आनतेन भयाच्चिन्तया वेति भावः । शिरसेति । उपलक्षित इति भावः । गुम्फति तत्प्रीतये इति भावः ॥ १०७ ॥

आस्यं यद्यपि हास्यवर्जितमिदं लास्येन वीतं वचो
नेत्रं शोणसरोजकान्ति तदपि क्वापि क्षणं स्थीयताम्।
मालायाः करणोद्यमो मकरिकारम्भः कुचाम्भोजयो-
र्धूपः कुन्तलधोरणीषु सुदृशः सायन्तनो दृश्यते॥१०८॥

मध्यममुदाहरति आस्यमिति। कश्चित्सखायं वक्ति। यद्यपीदम् आस्यं मुखं हास्यवर्जितं स्मितरहितं वचो लास्येन गीतादिना वीतं रहितं तथा नेत्र शोणसरोजकान्ति कोकनदद्युति कोपवशात् तदपि तथापि एतन्नयनाऽविषयीभुते प्रदेशे क्षण स्थीयताम्। एत्र च मनोभावग्राहकत्त्व व्यज्यते। अवस्थितेः फलमाह सुदृशः। इदमग्रेप्यन्वेति। मालायाः स्रजः करणोद्यमः करणोत्साहः कुचाम्भोजयोः स्तनकमलयोः। अम्भोजपदं शोभाऽतिशयं व्यनक्ति। मकरिकाऽऽरम्भो रचनाविशेषः। कुचाऽऽभोगयोरिति पाठे कुचोच्छ्राययोरित्यर्थः। कुन्तलधोरणीषु केशसङ्घातेषु। सायं भवः सायन्तनः। इद माग्रप्यन्वेति। धूपः सुगन्धिद्रव्येणाऽधिवासः

आस्यमिति। लास्यं गीतादि। यद्वा लास्यपदेन प्राकट्यं लक्ष्यते। तदपि तथापि क्वाऽप्येतन्नयनाऽविषयीभूते प्रदेशे क्षणं स्थीयताम्। एतेन मनोभावग्राहकत्वं व्यज्यते। उद्यम उत्साहः। मकरिका पत्रलेखरचनाविशेष इत्यर्थः। धोरणी सङ्घातः। सायन्तन इति सर्वत्राऽन्वयि। धूपः सुगन्धिद्रव्येणाऽधिवास। एवञ्चैतादृशसामग्रीसम्पादनसत्त्वात् अग्रे किं भावीति द्रष्टव्यमित्यतोऽपि मनोभावग्राहकत्वं द्योत्यते। नायकस्य स्वत एव परामर्शः सख्युक्तिर्वा। एतादृशसामग्रीसत्त्वाद्द्रुतं प्रसादं करिष्यतीति भाव.॥ १०८॥

भयकृपालज्जाशून्यः कामक्रीडायामकृतकृत्याऽकृत्यविचारोऽधमः । यथा ।

उदयति हृदि यस्य नैव लज्जा
न च करुणा न च कोपि भीतिलेशः ।
बकुलमुकुलकोशकोमलां मां
पुनरपि तस्य करे न यातयेथाः ॥ १०९ ॥

मानी चतुरश्च शठे एवान्तर्भवति ।

दृश्यते । एवं चैतादृशसामग्रीसत्त्वात् अग्रे किं भावि द्रष्टव्यमिति मनोभावग्राहकत्वं द्योत्यते ॥ १०८ ॥

अधममुदाहरति उदयतीति । का चित्सखीमाह हे सखि यस्य हृदि मनसि कापि किंचिद्विषयिण्यपि लज्जा व्रीडा नोदयति नोद्गच्छति यस्य करुणोदयोपि न कोपि भीतिलेशः न । अयनेरात्मनेपदमनित्यम् । अतो बकुलमुकुलकोशकोमलाभाम् बकुलानां मुकुलास्त एव कोशाः सर्वसौगन्ध्यनिधानत्वात् तद्वत्कोमलां माम् । पुनरपि तस्य करे हस्ते न यातयेथाः । क्रीडाया असह्यत्वादिति भावः । पुष्पिताग्रावृत्तम् ॥ १०९ ॥

उदयतीति । कोपीति लिङ्गविपरिणामेन लज्जादावप्यन्वेति । कापि लज्जा किञ्चिद्विषयिण्यपीत्यर्थः । एवमग्रेपि । बकुलमुकुला एव कोशाः सर्वसुगन्धनिधानात् तद्वत् कोमलाम् । तत्क्रीडासाहित्यस्याऽसह्यत्वादिति भावः ॥ १०९ ॥

शठे एवेति । एवकारोऽन्तर्भवतीत्युत्तरं योज्यः । अन्तर्भवत्येव न स्वतन्त्र इत्यर्थः । अयोगव्यवच्छेदार्थश्चैवकारः । शठपदमनुकूलाऽतिरिक्तपरमित्यपि कश्चित् । एतेन दक्षिणस्यापि मानित्वादिसम्भवेन शठे एवेत्यसङ्गतमित्यपास्तम् ।

मानी यथा ।

बाह्याऽऽकूतपरायणं तव वचो वज्रोपमेयं मनः
श्रुत्वा वाचमिमामपास्य विनयं व्याजाद्बहिः प्रस्थिते ।
प्रातर्वीतविलोकने परिहृतालापे विवृत्तानने
प्राणेशे निपतन्ति हन्त करुणा वामभ्रुवो दृष्टयः ॥११०॥

ननु मानी चतुरश्चान्यो ऽस्ति स काऽन्तर्भूत इत्यत आह शठे एव न स्वतन्त्रभेद इत्यर्थः । इत्येवकारः अयोगव्यवच्छेदार्थः । एवं च दक्षिणस्यापि मानित्वचातुर्यत्वस्वादन्ययोगव्यवच्छेदार्थकत्वमसम्भवीति दूषणमदूषणं वेदितव्यम् ।

मानिनमुदाहरति बाह्याकूतेति । का चित्कं चिदाह हे कान्त तव यत् प्रातःकालीनमहमधुनैवाऽऽगमिष्यामीति वचो वचनम् बाह्याकूतपरायणम् बाह्य बहिर्भवं यत्

सखी नायिकां प्रत्याह बाह्येति । बाह्य एवाऽऽशयो न त्वाभ्यन्तरः तदर्थाऽननुष्ठानात् । प्रातः प्रातःकालीनम् अहमधुनैवागमिष्यामीति तव वचः केवलं बाह्याऽऽशयमात्रप्रधानं तथाविधकार्याऽदर्शनेन आन्तरस्याऽन्यादृशत्वात् इति भावः । तव मनो वज्रसदृशम् । यतस्त्वद्विरहेणेदृशीमवस्थां गताअपि प्रतारयसीति भावः । एवं च परपीडाज्ञानविधुरस्य पूर्ववचनवदिदानीन्तनमप्यलीकमिति व्यज्यते इति । इमां नायिकाया वाचं श्रुत्वा नायिकाविषयिकसान्त्वनम् अपास्य अर्थान्नायके व्याजात्कपटात् । एवं च शठत्वं ध्वन्यते । बहिः केलिसदनादित्यादि । परिहृतालापे न केवलं तावदेव अपि तु विलोकनत्यागः, न केवलं विलोकनत्याग संमुखतापि नेत्याह विवृत्तानने परिवर्त्तितास्ये । एवं चैतादृशं व्याजान्निर्गमन कुपितत्वमावेदयति । प्राणेशे । एवं च तथाविधौचिती व्यज्यते । प्रस्थिते गन्तुमुद्यते सति ईदृशवाङ्मात्रश्रवणात् प्रस्थानेनाऽभिमानित्वमावेद्यते । वामभ्रुवः सुन्दरभ्रुवः कृपया दीनाः । विरहकातरतयेति भावः ॥ ११० ॥

वचनचेष्टाव्यङ्ग्यसमागमश्चतुरः । वचनव्यङ्ग्यसमागमो यथा।

तमोजटाले हरिदन्तराले
काले निशायास्तव निर्गतायाः।
तटे नदीनां निकटे वनानां
घटेत शातोदरि कः सहायः॥ १११॥

अकूतमाशयस्तत्परायणं तत्प्रधानम् । तथाविधकार्याऽदर्शनात् । आन्तरन्तु अन्यादृशम् । यतः वज्रोपमेयम् । वज्रतुल्यं कठिनं तव मनः । एवं च परपीडाज्ञानविधुरं तस्याप्यधुनैवाऽऽगमिष्यामीति प्रातःकालीवचनवत् इदानीन्तनमपि तव वचनमलीकमेवेति व्यज्यते। इमां वाचं श्रुत्वा अर्थान्नायिकायाः । विनयं तत्सान्त्वनम् अपास्य परित्यज्य व्याजात् कपटात्। एवं च शठत्वम्। वहिः केलिसदनात्। परिहृताऽऽलापे त्यक्तसम्भाषणे। न केवल सम्भाषणपरित्यागः अपि तु विलोकनस्यापीत्याह । वीतविलोकने त्यक्तविलोकने। न केवलं विलोकनत्यागः किं तु संमुखतापि नेत्याह विवृत्तानने परिवर्तितास्ये । एव चैतादृशस्य केलिसदनाद्व्याजादपि निर्गमनं कुपितत्वमावेदयति। प्राणेशे। एवं च असान्त्वनेन तथाविधविलोकनौचिनी व्यज्यते। प्रस्थिते गन्तुमुद्यते। एवं चैतादृशवाक्यमात्रश्रवणादेव प्रस्थित इत्यभिमानवत्त्वमावेद्यते। वामभ्रुवः सुन्दरभ्रुवः हन्त इति खेदे। कृपणा दीनाः । विरहकातरतयेति भावः। दृष्टयः कटाक्षाः निपतन्ति। एवं नायिकादृष्टिनिवारणं नास्तीति द्योत्यते। प्रातर्व्या-

तम इति । तमोव्याप्तदिग्विभागे सति रात्रिकाले निर्गतायास्तवेत्यन्वयः। अहमेव सहाय इत्याशयः॥ १११॥

चेष्टाव्यङ्ग्यसमागमो यथा ।

कान्ते कनकजम्बीरं करे किमपि कुर्वति ।
आगारलिखिते भानौ बिन्दुमिन्दुमुखी दधौ ॥११२॥

जात् प्रातःकालीनकार्यमिपादित्यर्थमाहुः केचित् । प्रातः प्रस्थित सतीत्याहुरपरे । शार्दूलविक्रीडित वृत्तम् ॥ ११० ॥

प्रथमोद्दिष्टत्वाद्वचनव्यङ्ग्यसमागमचतुरमुदाहरति तमोजटाले इति । कोपि नायिकां वक्ति हे शातोदरि । एवं चाऽसहाये । तत्रागमनमसम्भवीति व्यज्यते । निशाया रात्रेः काले समये तमोजटाले तमोजटास्तमःस्तोमा यस्मिन् । प्राणिस्थादातो लजन्यतरस्यामिति लच् । हरितां दिशामन्तरालमभ्यन्तरं तस्मिन् । आशाश्च हरितश्च ताः । अभ्यन्तरं त्वन्तरालमित्यमरः । निर्गतायाः प्रचलितायाः । तव वनानां निकटे सन्निधे नदीनां तटे तीरे सहायः सहचरः को घटेत भवेत् । एवं च सर्वतःप्रसारिगाढतरतिमिरे प्रचलितायास्तत्र जनसञ्चारशून्यवननिकटे नदीतीरे न कोपि सहचर इति अहमेव सहचरो भवामीति व्यज्यते । उपजातिर्वृत्तम् ॥ १११ ॥

चेष्टाव्यङ्ग्यसमागमचतुरमुदाहरति कान्तइति । काचित्कांचिदाह कान्ते कमनीयरूपशालिनि नायके किमपि अनिर्वचनीयशोभाशालि कनकजम्बीरं सुवर्णफलविशेषं करे हस्ते कुर्वति गृह्णाति सति । एवं स्तनसदृशकनकजम्बीरकरग्रहणरूपचेष्टया त्वत्कुचमर्दननिदानं रतिं कदा प्राप्स्यामीति व्यज्यते । इन्दुमुखी चन्द्रवदना नायिका । तदभिप्रायविज्ञेति

कान्तइति । कनकजम्बीरस्य करग्रहणेन रतिप्रार्थना ध्वन्यते । भानौ विन्दुदानेन सूर्यास्ते विधूदये वा तल्लाभ इति व्यज्यते ॥ ११२ ॥

प्रोषितः पतिरुपपतिर्वैशिकश्च भवति । प्रोषितपतिः प्रोषितोपपतिः प्रोषितवैशिकश्चेति त्रयम् । क्रमेणोदाहरणानि ।

ऊरू रम्भा दृगपि कमलं शैवलं केशपाशो
वक्त्रं चन्द्रो लपितममृतं मध्यदेशो मृणालम् ।
नाभिः कूपो वलिरपि सरित् पल्लवः किं च पाणि-
र्यस्याः सा चेदुरसि न कथं हन्त तापस्य शान्तिः॥ ११३॥

भावः। इन्दुमुखीपदेन हर्षोत्कर्षो गम्यते । आगारलिखिते गृहभित्तिनिर्मिते । एव च सङ्केतदाने सुभगत्वमावेद्यते । भानौ सूर्ये बिन्दुं शून्यम् अदर्शकमित्यर्थः । दधौ धृतवती । एवं च सूर्यास्ते तव रतिं दास्ये इति व्यज्यते । यद्वा कलङ्कज्ञापकमिति भावः । चन्द्रोदये तव रतिं दास्ये इति व्यज्यते । पश्यावक्रम् ॥ १११ ॥

प्रसङ्गादन्यदप्याह प्रोषित इति । पतिरुपपतिर्वैशिकश्चेति त्रयः प्रोषिता भवन्तीत्यर्थः ।

प्रोषितपतिमुदाहरति ऊरू रम्भेति । को ऽपि विरही वक्ति यस्या नायिकायाः केशपाशः शैवालमेव । शैवालपदं श्यामतामपि ध्वनयति । वक्त्रं चन्द्र एव लपितं वचनममृतमेव दृगपि कमलं नीरजमेव पाणिः पल्लव एव । पल्लवपदमरुणतां व्यञ्जयति । सरित्पदं कामिदृष्टेर्दुलङ्घ्यत्वमावेदयति । नाभिकूपपदं गम्भीरत्वं ध्वनयति । सरित्पदं कामिमनसो निर्गमनाऽयोग्यतां व्यनक्ति । मध्य-

ऊरू इति । वचसि अमृतत्वेन दौर्लभ्यमपि द्योतयति । नायिकायाः कुलवत्त्वद्योतनादस्य पतित्वं सूक्ष्मत्वेन मृणालता मध्यस्य ॥ ११३ ॥

यान्त्याः सरः सलिलकेलिकुतूहलाय
व्याजादुपेत्य मयि वर्त्मनि वर्तमाने।
अन्तःस्मितद्युति चमत्कृतदृक्तरङ्गै-
रङ्गीकृतं किमपि वामदृशः स्मरामि॥ ११४॥

द्वेशो मृणालमेव । मृणालपदं सूक्ष्मत्वमभिव्यञ्जयति। सा चेत् यदि उरसि वक्षसि तदा तापस्य अर्थाद्विरहस्य शान्तिर्विनाशः । हन्तेति हर्षे। कथं न भविष्यति अपि तु भविष्यत्येव । एवं च यत्रेदमेकैकमपि तापाऽपनोदकं तत्र किमु वाच्यं समुदितमिति भावः । रूपकालङ्कारः । मन्दाक्रान्तावृत्तम्॥ ११३॥

प्रोषितमुपपतिमुदाहरति यान्त्या इति । कश्चित्क चिरमत्याह सलिलकेलिकुतूहलाय जलक्रीडाकौतुकाय सरः सरोवरं यान्त्या गच्छन्त्या वामदृशः सुन्दरनयनायाः वर्त्मनि मार्गे व्याजात् कपटात्। एवं च प्रच्छन्नकामुकत्वं व्यज्यते। उपेत्याऽऽगत्य वर्तमाने मयि । एवं च विलासविशेषाऽभाववत्ता ध्वन्यते। यद्वा वामभ्रुवः व्याजादुपेत्य उप समीपमागत्य वर्त्मनि वर्त्तमाने इति योजना। अन्तःस्मितद्युति अन्तर्गूढ हास्यं तस्य कान्तिर्यत्र क्रियायाम् । चमत्कृतदृक्तरङ्गैः मनोहारिदृग्विभ्रमैः किमपि केन चित्प्रकारेण । एवं चाऽन्यजनाऽज्ञेयत्वं द्योत्यते। अङ्गीकृतं सङ्केतचेष्टितमिति स्मरामि चिन्तयामि। अत्रोपपतित्व प्रोषितत्वं च स्फुटमेव॥ ११४॥

वर्त्मनि मार्गे मयि व्याजात् नायिकाया उप समीपमेत्य आगत्य वर्त्तमाने सति गूढहासकान्ति यथा तथा मनोहारिदृग्विभ्रमैः किमपि लोकोत्तरम् अन्यजनाऽनभिज्ञेयञ्च॥ ११४॥

अधृतपरिपतन्निचोलबन्धं
मुषितनकारमवक्रदृष्टिपातम् ।
प्रकटहसितमुन्नतास्यबिम्बं
पुरसुदृशः स्मरचेष्टितं स्मरामि ॥ ११५ ॥

अनभिज्ञो नायको नायकाऽऽभास एव । यथा ।

प्रोषितं वैशिकमुदाहरति अधृतेति । कश्चित्कं चिदाह पुरसुदृशः वाराङ्गनायाः अधृतोऽनवलम्बितः अत एव परिपतन् विस्रंसन् निचोलस्य वसनस्य बन्धो यत्र क्रियायाम् । मुषितनकारं मुषितश्चोरितः परिहृतो वा नकारो न नेति वचनं यत्र । मुषितपदं कादाचित्कं तदभिव्यक्तेरभावं व्यनक्ति । अवक्रदृष्टिपातम् । अकुटिलः कटाक्षो यत्र सर्वदा प्रसन्नत्वात् । तथा प्रकटहसितं प्रकटं स्फुटं हसितं यत्र । उन्नतास्यबिम्बम् उन्नतं नम्रताहीनमास्यबिम्बं वदनबिम्बं यत्र तादृशं स्मरचेष्टितं कामविलसितं स्मरामि ध्यायामि । एवं च स्त्रीयादिवैलक्षण्यादिदमेव चिन्तयामि नान्यदिति भावः । पुष्पिताग्रावृत्तम् ॥ ११५ ॥

प्रसङ्गान्नायकाऽऽभासं लक्षयति अनभिज्ञ इति । अनभिज्ञः सङ्केतचेष्टितज्ञानविकलः । अत एव नायकाभासः । तद्वदाभासो न तु स इत्यर्थः ।

अधृतेति । उन्नतत्वं चुम्बनादाने योग्यत्वं व्यञ्जयति । अधृतेत्यादिना स्तनयोः स्फुटता ग्रहणयोग्यता च । अवक्रत्वेन सदा प्रसन्नत्वम् । प्रकटहास्येनौष्ठग्रहणसौकर्यञ्च ॥ ११५ ॥

शून्ये सद्मनि योजिता बहुविधा भङ्गी वनं निर्जनं
पुष्पव्याजमुपेत्य निर्गतमथ स्फारीकृता दृष्टयः।
ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्षोरुहा-
वेतेनापि न वेत्ति दति कियता यत्नेन स ज्ञास्यति॥११६॥

न च नायिकाया इव नायकस्यापि ते ते भेदा· स-

तमुदाहरति शून्ये इति। कापि दूतीं वक्ति। शून्ये जनसञ्चारविरहिणि सद्मनि गेहे बहुविधा अनेकप्रकाराः भङ्गीर्विभ्रमरचनाः योजिताः। पुष्पव्याजं पुष्पाऽवचयच्छलम् उपेत्य प्राप्य पुष्पाऽवचयच्छलेनेत्यर्थः। वनमरण्यं निर्जनं जनरहितं निर्गतं चलितम्। शून्यनिर्जनपदाभ्यां लज्जाऽनर्हत्वमावेद्यते। अतोऽप्यनन्तर दृष्टयः कटाक्षाः विस्फारिताः विस्फारीकृताः। किं च अद्यापि तूष्णीमेवाऽयमित्यावेशवशादिति भावः। ताम्बूलाऽऽहरणच्छलेन ताम्बूलदानव्याजेन वक्षोरुहौ स्तनौ व्यक्तौ प्रकटौ विहितौ। हे दूति एतेनापि शून्यसदनपरिहासविपिनविनामकटाक्षविक्षेपविलासस्तनकलशगोपननिरासाद्यभिप्रायप्रकाशकमाहमेनापीत्यर्थः। स नायकः। एवं च नामाऽनभिधानेन दुःखविशेषो द्योत्यते। यदि न वेत्ति न जानाति तर्हि कियता प्रयत्नेन ज्ञास्यति। एवं चैतदस्मादन्यद् ज्ञापकं नास्तीत्यर्थः। एवं च कश्चिन्मदभिप्रायवेदी आनेय इति व्यज्यते। शार्दूलविक्रीडितं वृत्तम्॥११६॥

शून्ये इति। शून्यगृहे बहुप्रकारा वाक्कटाक्षादिबहुप्रकाराः कृता। तत उद्दीपनाऽतिशयाय पुष्पव्याजं प्राप्य निर्जनं वनं प्रति गतमित्याद्यन्वय। अयं न कार्यक्षम इति व्यङ्ग्यम॥११६॥

न्त्विति वाच्यम् । तस्या अवस्थाभेदेन भेदात् । तस्य च स्वभावेन भेद इति विशेषात् । अनुकूलत्वं दक्षिणत्वं धृष्टत्वं शठत्वमिति चत्वार एव नायकस्य स्वभावा इति । अन्यच्चाऽवस्थाभेदेन यदि भेदो नायकस्य स्यात्तदोत्कविप्रलब्धखण्डितादयो नायका अपि स्वीकर्तव्याः । तथा च सङ्केतव्यवस्थायां स्त्रीणां गमने वा संप्रदायादन्यसमागमशङ्का धूर्तत्वं वा ऽन्यसम्भोगचिह्नितत्वं वा नायकानां न तु नायिकानाम् । तान् प्रति तदुद्भावने रसाऽऽभासाऽऽपत्तिरिति । तेषां नर्मसचिवः पीठमर्दविटचेटकविदूषकभेदाच्चतुर्धा ।

ननूत्कादयो भेदाः कथं न नायकस्येत्यत आह न चेति । उत्तरयति तस्या इत्यादि । तस्याः नायिकायाः अवस्थाभेदेन कालकृतविशेषेण तस्य नायकस्य स्वभावभेदेन प्रकृतिभेदेन । स्वभावमेव विवृणोति अनुकूलत्वमित्यादिना । अयमर्थः । नायकस्याऽप्युत्कादिभेदयुक्तेः तुल्यत्वपङ्क्तिकतया खण्डितादिभेदवत्त्वे अनौचित्यापत्त्या रसभङ्गापत्तेः । अत एवाहुः प्राञ्चः "अनौचित्यादृते नाऽन्यद्रसभङ्गस्य कारण"मिति । वस्तुतस्तु यद्भेदवत्त्वे अनौचित्यमापतति तद्भेदवत्त्वाऽभावेऽप्यन्यभेदवत्त्वे न काचित् क्षतिः । कथमन्यथा प्रोषितभेदमुदा-

ते भेदा इति । उत्कादय इत्यर्थः । स्वभावानेव दर्शयति अनुकूलत्वमिति । अयं भावः । नायकस्योत्कादिभेदवत्वे तु तुल्ययुक्त्या खण्डितादिभेदानामप्यापत्तौ अनौचित्यापत्त्या रसभङ्गापत्तिः । वस्तुतो यद्भेदे सति न अनौचित्यं तद्भेदसत्त्वे ऽपि न क्षतिरित्याहुः । व्यवस्थायामिति । व्यवस्था कालाऽतिक्रम । पूर्वमेवाऽऽगत्य सचिवनर्मणि क्रीडायां सचिवः प्रधानसहाय इत्यर्थः ।

कुपितस्त्रीप्रसादकः पीठमर्दः । यथा ।

को ऽयं कोपविधिः प्रयच्छ करुणागर्भं वचो जायतां
पीयूषद्रवदीर्घिकापरिमलैरामोदिनी मेदिनी ।
आस्तां वा स्पृहयालु लोचनमिदं व्यावर्तयन्ती मुहु-
र्यस्मै कुप्यसि तस्य सुन्दरि तपोवृन्दानि वन्दामहे॥ ११७॥

हृतवान् स्वयमिति यत्किं चिदेतत् । प्रसङ्गात् तत्सहायानाह । तेषामिति । नर्मसचिवः नर्मणा ऽनुकूलव्यापारेण सचति समवैतीति सचिवः । सहाय इत्यर्थः । यद्वा नर्मणि क्रीडायां सचिवः प्रधानः सहाय इत्यर्थः । तदनुकूलव्यापारसम्पादक इति यावत् । के चित्तु पीठमर्दो विटश्चैव विदूषक इति त्रिधेत्युक्त्वा चेटस्य विटएवान्तर्भावमाहुः ।

तत्र पीठमर्दमुदाहरति कोऽयमिति । हे सुन्दरि अयमेतादृशः कः कोपविधिः कोपाङ्गीकारः आत्मना ऽनुचितकारित्वात् हेय इति भावः । किं तु करुणागर्भं करुणा दया गर्भे मध्ये यस्य । एतादृशकोपपरित्यागादिति भावः । आगमिष्यामि तमानयेत्यादिरूपं वा वचनं प्रयच्छ देहि । अन्यच्च पीयूषद्रवदीर्घिकापरिमलैः अमृ-

कोयं कोपविधिः । यथा नायकाऽपराधकल्पनया करुणा गर्भे यस्य तादृशं वचो देहि येन पीयूषमेव वापी जायताम् । अमृतस्यैव दानात् च्युतैः कमलनिर्गतपरिमलैः पृथ्वी च सुगन्धा जायताम् वा इत्यथवा आस्तां कोपः स्पृहयालु नायकदर्शनोत्सुकम् इदं प्रत्यक्षदृश्यमानं चिह्नं नेत्रं व्यावर्त्तयन्ती वृथाऽपराधगणनाद्वज्ज्वाकृष्टमिव बलात्परावर्तयन्ती । एवं च कोपोपि तव महापुण्यशालिनि कस्मिंश्चिदेव स्थायित्वेन गृहीत इति सो ऽप्यस्माकमनुकूलताद्योतक एवेति भावः ॥ ११७ ॥

कामतन्त्रकलाकोविदो विटः। यथा।

आयातः कुमुदेश्वरो विजयते सर्वेश्वरो मारुतो
भृङ्गः स्फूर्जति भैरवो न निकटं प्राणेश्वरो मुञ्चति।
एते सिद्धरसाः प्रसूनविशिखो वैद्योऽनवद्योत्सवो
मानव्याधिरसौ कृशोदरि कथं त्वच्चेतसि स्थास्यति ११८

तसारत्रापीसङ्घट्टनैः मेदिनी भूः। एवं च नाऽहं स्वसखायं कार्यार्थमभ्यर्थये इति भावः। एवं च त्वदप्रसन्नतायां मन्मित्रस्य दुःखवत्त्वेन जगदपि दुःखीति व्यज्यते। आमोदिनी परसन्तोषवती आस्तां भवतु। अथ वा आस्ता तिष्ठतु कोप इति भावः। स्पृहयालु तदपि च दर्शनोत्सुकमिदं प्रत्यक्षदृश्यमानचिह्नं लोचनम्। अत एव मुहुर्वार वारम्। व्यावर्त्तयन्ती परावर्तयन्ती यस्मै कुप्यसि तस्य तपोवृन्दानि वन्दामहे नमस्कुर्महे। एवं च नायकं प्रति यत्र तत्र कोपेऽपि पुण्योद्रेकाद्भवति तत्र तत्र प्रसादस्य का वार्त्तेति व्यज्यते। शार्दूलविक्रीडितं वृत्तम्॥ ११७॥

विटं लक्षयति कामन्त्रेति। तन्त्रं प्रधाने सिद्धान्ते इति विश्वः।

कामतन्त्रेति। तन्त्रं प्रधाने सिद्धान्ते इति विश्व।

आयात इति। कुमुदेश्वरश्चन्द्र तन्नामकरसश्च सर्वेश्वरः प्राणप्रदत्वात्। शीतमन्दसुरभित्वेन वशीकाराद्वा तन्नामकरसश्च। भैरवो दुःखप्रद तन्नामकरसश्च। प्राणेश्वरो दयितस्तन्नामकरसश्च। सिद्धो रसो येस्तै आलम्बनोद्दीपनविभावत्वादिति भावः। अनवद्य उत्सवो यस्मात् तेनाऽमृतहस्तता। कृशोदरीत्वेन व्याध्यसहिष्णुता॥ ११८॥

सन्धानचतुरश्चेटकः ।

सा चन्द्रसुन्दरमुखी स च नन्दसूनु-
दैवान्निकुञ्जभवनं समुपाजगाम ।
अत्रान्तरे सहचरस्तरणौ कठोरे
पानीयपानकपटेन सरः प्रतस्थे ॥ ११९ ॥

तमुदाहरति आयात इति । हे कृशोदरि । एवं च मानस्य स्थित्यभावः विवेकराहित्यं वा द्योत्यते । कुमुदेश्वरश्चन्द्रः आयातः प्राप्तः । सोऽभ्युदित इत्यर्थः । सर्वेश्वरः सर्वेषामीश्वरः प्राणरूपत्वात् । यद्वा ईश्वरो नियोजकः । शीतमन्दसुरभित्वेन वशीकर्तृत्वात् मारुतो वायुर्विजयते । भैरवो दारुणः । विरहिपीडाप्रदत्वात् । भृङ्गो भ्रमरः स्फूर्जति विलसति । प्राणेश्वरो नायकः निकटं सविधं न मुञ्चति न त्यजति । सर्वदा निकटस्थ एवेति भावः । ईश्वरपदं वन्दनीयतां ध्वनयति । एतावता किमित्यत आह । एते चन्द्रादयः सिद्धरसाः सिद्धो निष्पन्नो रसः शृङ्गारो यैस्ते । उद्दीपनालम्बनविभावा इत्यर्थः । अनवद्योत्सवः । अनवद्योऽनिन्द्यः महानिति यावत् उत्सवः कार्यसमारम्भो यस्य एतादृशः प्रसूनविशिखः कुसुमबाणः वैद्यः । एवं सति असौ मानव्याधिः मान एव व्याधिः सन्तापकत्वादिति भावः । त्वच्चेतसि त्वन्मनसि कथं केनोपायेन स्थास्यति । असाविति पदं स्फुटतया झटिति वैद्यप्रतीतिविषयत्वं तेन च प्रतीकारयोग्यत्वं व्यनक्ति । अथ च कुमुदेश्वरप्राणे-

सेति । तरणिः सूर्यः । सहचरो वयस्यः । अर्थान्नन्दसूनोरारामं तत्संयोगान्तरायं मन्वानस्तृषितोऽस्मीति उक्त्वा सरोवरं प्रति जगामेत्यर्थः ॥ ११९ ॥

अङ्गादिवैकृत्यैर्हास्यकारी विदूषकः । यथा ।

आनीय नीरजमुखीं शयनोपकण्ठ-
मुत्कण्ठितोऽस्मि कुचकञ्चुकमोचनाय ।
अत्रान्तरे मुहुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकण्ठनादः ॥ १२० ॥

भैरवादिसिद्धरसानां सिद्धत्वे ऽप्रतिहतोपक्रमे अमृतहस्ते चिकित्सति व्याधिर्न स्थातुमर्हतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ११८ ॥

चेटकं लक्षयति सन्धाने संयोजने ।

तमुदाहरति सेति । कश्चित्कं चिदाह सा प्रसिद्धलावण्यादिगुणा चन्द्रसदृशमुखी चन्द्राधिकवदना नायिका स प्रसिद्धसर्वविभवः नन्दसूनुः नन्दस्यानन्दजनकस्य सूनुः । एवं च पितृगुणत्वेनाऽऽनन्दजनकत्वस्याऽऽवश्यकत्वमावेद्यते । दैवादसङ्केतात् निकुञ्जभवनं कुञ्जगृहं समुपाजगाम । अत्रान्तरे एकत्र मिलनकाले सहचरो वयस्यः अर्थान्नन्दसुतः तरणौ सूर्ये कठोरे तीव्रे सति । एवं च पानीयस्पृहायोग्यत्वं व्यज्यते । पानीयपानकपटेनाऽम्बुपानच्छलेन सरः प्रतस्थे चचाल । आत्मनि तत्सयोगान्तरायं मन्वानस्तृषितो ऽस्मीति सरोवरं जगाम । वसन्ततिलकावृत्तम् ॥ ११९ ॥

विदूषकमुदाहरति आनीयेति । नायकः कं चिदाह नी-

आनीयेति । कुचकञ्चुकेति । कुचपदमधिकम् । कञ्चुके नायिकासम्बन्धद्योतनाय वा । कुक्कुटेत्यत्र कण्ठपदमधिकम् । तरुणत्वेन स्वरदैर्घ्यम् । एवं च प्रातःकालज्ञानेन नायिकानिषेधवाक्यादिप्रतिबन्धनेन नायकसाहाय्यकरणमिति भावः ॥ १२० ॥

स्तम्भः स्वेदो ऽथ रोमाञ्चः स्वरभङ्गो ऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका गुणाः ॥

यथा ।

भेदो वाचि दृशोर्जलं कुचतटे स्वेदः प्रकम्पो ऽधरे
पाण्डुर्गण्डतटी वपुः पुलकितं लीनं मनस्तिष्ठति ।
आलस्यं नयनश्रियश्चरणयोः स्तम्भः समुज्जृम्भते
तत्किं राजपथे निजामधरणीपालो ऽयमालोकितः ॥ १२१ ॥

रजमुखीं कमलवदनां शयनोपकण्ठ तल्पसमीपम् आनीय प्रापय्य कुचकञ्चुकमोचनाय यावदुत्कण्ठतोऽस्मि अत्रान्तरे एतन्मध्ये विदूषकेण प्रातस्तनः प्रातःकालीनः तरुणकुक्कुटकण्ठनादः तरुणताम्रचूडकण्ठध्वनिः मुहुर्वार वारम् । अकारि कृतः । तरुणपदं स्वरदैर्घ्यमावेदयति तच्च सर्वश्रुतिविषयत्वम् । विदूषकत्वं स्फुटमेव । वसन्ततिलका वृत्तम् ॥ १२० ॥

साधननिरूपणमन्तरा साध्यनिरूपणाऽसम्भवात् शृङ्गारं निरूपयितु निरूपितविभावादिप्रसङ्गात् सात्त्विकानाह स्तम्भः स्वेद इति ।

विस्तरभयात्तल्लक्षणप्रत्येकोदाहरणान्यनभिधाय सर्वानप्येकपद्येनोदाहरति भेदो वाचीति । काचित्कां चित्प्रत्याह हे सखि वाचि वचने भेदः स्वरभङ्गः दृशोर्नेत्रयोः जलमश्रु कुचतटे

भेद इति । स्वरभङ्गाऽश्रुस्वेदवेपथुविवर्णतारोमाञ्चप्रलयस्तम्भाः क्रमेण निर्दिष्टाः ।

लीनं वाच्यज्ञानशून्यम् । कटाक्षादिकृतनेत्रशोभाया आलस्यमभाव । तेन स्तम्भ एवोपपाद्यते । नयनशोभयोः स्थगनकारीति दृग्जलविशेषणमिति कश्चित् ॥ १२१ ॥

रतिस्थायिभावः शृङ्गारः । स च द्विविधः सम्भोगो विप्रलम्भश्च ।

स्वेदः अधरे ओष्ठे प्रकम्पो वेपथुः । चुम्बनलालसत्वादिति भावः । गण्डतटी पाण्डुः पाण्डुरा विरहवशादिति भावः । एवं च वैवर्ण्यमभिव्यज्यते । वपुः शरीरम् पुलकित रोमाञ्चितम् । मनश्चेतः लीनम् । एवं च बाह्यज्ञानशून्यता ऽऽवेद्यते । नयनश्रियः नेत्रलक्ष्म्याः । आलस्यं नेत्रमप्यलसितं किं पुनरङ्गानीति भावः । चरणयोः स्तम्भो गतिनिरोधः समुज्जृम्भते विलसतीत्यर्थः । तत्किं तर्हि किं राजपथे राजमार्गे अनया निजामधरणीपालः निजामाख्यो देवगिरिराज आलोकितो दृष्टः । यद्वा निजानात्मीयानमति प्राप्नोतीति निजामः स चासौ धरणीपालः दुःसहदानवादिविदारकत्वादिति भावः । एतादृशः श्रीकृष्ण इत्यर्थः । एवं चैवंविधगुणदर्शनमन्तरा कथमेतादृश्यवस्थेति भावः । अत्र अनुमानालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १२१ ॥

शृङ्गारं लक्षयति रतीति । सङ्गमेच्छाभिलाषरूपा रतिः । तत्र चित्तवृत्तीनामाशुविनाशित्वेपि वासनात्मतया सूक्ष्मरूप-

संभोग इति । विप्रलम्भाऽन्यत्वे सति रतिप्रकृतित्वं संभोगत्वम् । सङ्गमप्रत्याशाकालीनत्वे सति स्वाधीनसङ्गमाऽभावविशिष्टरतिप्रकृतित्वं विप्रलम्भत्वम् । सत्यन्तोपादानात् यूनोरन्यतरस्मिन् मृते न सा । स्वाधीनत्वोपादानादेकदेशस्थयोरपि गुरुलज्जादिहेतौ रतिप्रतिबन्धे विप्रलम्भे च विदेशस्थयोरपि दूतीप्रेषणादौ सम्भोग एवेत्याहुः । रतिरियं ममेत्याकारज्ञानरूपा प्रतीतिः । सङ्गमेच्छारूपोऽभिलाषो वा ।

संभोगो यथा।

वियति विलोलति जलदः
स्खलति विधुश्चलति कूजति कपोतः।
निष्पतति तारकाततिरान्दोलति वीचिरमरवाहिन्याः॥ १२२॥

तया वाऽवस्थानात् स्थायित्वम्। अत्रेदं बोध्यम्। आनन्दरूपतया प्रकाशमानं रसवच्छिन्नं चैतन्यं शृङ्गारः। आवरणं चाऽज्ञानमेव। शृङ्गारं विभजते स चेति। द्विविध इति। उभयस्यैव रतिप्रकाशकत्वात्। तदुक्तम्।

"अनुकूलौ निषेवेते यत्राऽन्योन्यं विलासिनौ।
दर्शनस्पर्शनादीनि सम्भोगो ऽयमुदाहृतः॥
भावो यदा रतिर्नाम प्रकर्षमधिगच्छति।
नाऽधिगच्छति चाऽभीष्टं विप्रलम्भस्तदोच्यते"॥ इति।

तत्र सम्भोगमुदाहरति वियतीति। का चित्कस्याश्चिद्विपरीतरतं कां चित्प्रसाह हे सखि वियत्यन्तरिक्षे जलदः केशपाशः। जलदपद केशकलापं लक्षयन् श्यामतां विरहतापोपशान्ति स्वेदजलवत्त्वं वा व्यञ्जयति। विलोलति चञ्चलो भवति

वियतीति। जलद केशपाशः। वियति अन्तरिक्षे चलो भवति। पुनः स्खलति पृष्ठसम्बद्धो भवति। तेन विपरीतरतौद्धत्यम्। विधुर्मुखं चेष्टते। चुम्बनौत्सुक्यात्। यद्वा वियति मध्ये इति। मुखं चलति स्खलति च। श्रमाधिक्यादन्यदा योज्यमानमन्यत्र युनक्ति। यद्वा विधुश्चन्द्राख्यं भूषणं स्खलति। कपोतः कण्ठः। तेन मणितम्। तारकाततिः केशपाशस्पुष्पाऽऽवलिः। अमरवाहिन्या वीचिर्मुक्ताहारः॥ १२२॥

विप्रलम्भो यथा ।

प्रादुर्भूते नवजलधरे त्वत्पथं द्रष्टुकामाः
प्राणाः पङ्केरुहदलदृशः कण्ठदेशं प्रयान्ति ।
अन्यत्किं वा तत्र मुखविधुं द्रष्टुमुड्डीय गन्तुं
वक्षः पक्षं सृजति विसिनीपल्लवस्य च्छलेन ॥ १२३ ॥

एवं च विपरीतरते केशकलापस्य शय्याद्याधारवत्तया नाऽन्तरिक्षस्थितिरिति विपरीतरतमात्रेष्यते । तथा विधुर्मुखचन्द्रः विधुपदं मुखं लक्षयन् सुधारूपत्वमभिव्यञ्जयति । चलति चेष्टते । चुम्बनौत्सुक्यादिति भावः । स्खलति च क्रियासु संकुचति । लज्जाप्रदर्शनव्याजादानन्दाद्वेति भावः । तथा कपोतः कण्ठः । कपोतपदं कण्ठं लक्षयन् ध्वनौ माधुर्यमभिव्यनक्ति । कूजति शब्दायते । एवं च मणितमभिव्यज्यते । तारकाततिर्मुक्ताकलापः कुसुमोच्चयो वा । तारकापदं मुक्तां कुसुमं वा लक्षयन् वर्तुलत्वोज्ज्वलत्वे व्यञ्जयति । निष्पतति । कण्ठात्केशकलापाद्वा रतौद्धत्येन हारत्रुटनात् तेनैव केशकलापविस्रंसनाद्वेति भावः । तथा ऽमरवाहिन्या वीचिः । वीचिपदं त्रिवलीं लक्षयन् श्रमस्वेदजलसम्भृतत्वं व्यनक्ति । तच्च रतप्रकर्षम् । अमरवाहिनीपदोपादानं नायिकायां सरसत्वं विरहतापोपशान्तिप्रवणत्वं त्रिवल्ल्यामुपरि वर्तमानत्वं वा व्यञ्जयति । वस्तुतस्तु अमरवाहिन्याः वीचिः हार इत्यर्थः । आन्दोलति चाञ्चल्यं प्राप्नोति विपरीतरतादिति भावः । गीतिर्वृत्तम् ॥ १२२ ॥

प्रादुरिति । त्वत्पदमिति पाठः । नवजलधरे इति । दुःसहत्वेन नवता ॥ १२३ ॥

विप्रलम्भे चाऽभिलाषचिन्तास्मृतिगुणकीर्तनोद्वेगप्रलापोन्मादव्याधिजडतानिधनानि दशाऽवस्था भवन्ति ।

तत्र सङ्गमेच्छा ऽभिलाषः । यथा ।

तस्यां सुतनुसरस्यां चेतो नयनं च निष्पतितम् ।
चेतो गुरु तु निमग्नं लघु नयनं सर्वतो भ्रमति ॥ १२४ ॥

विप्रलम्भमुदाहरति । प्रादुर्भूतइति । का चित्सखी नायकं प्रत्याह सम्बुद्धिपदाऽनुपादानं क्लेशमावेदयति । नवजलधरे ऽभिनवमेघे प्रादुर्भूते प्रकटीभूते । एवं च अदृष्टपूर्वत्वं तच्च भीत्यतिशयं व्यनक्ति । जलधरपदमुद्दीपकत्वं प्रादुर्भूतपदं चिरकालावस्थायित्वम् बहुतरदुःखप्रदत्वं च ध्वनयति । त्वत्पथं द्रष्टुकामाः त्वदागमनमार्गदर्शनवाञ्छावत्याः पङ्केरुहदृशः सरोजपत्रनेत्रायाः । पङ्केरुहपदं नेत्रमालिन्यमभिव्यनक्ति । प्राणाः कण्ठदेशं प्रयान्ति । एवञ्च प्राणोत्क्रमणकाल एवायमिति व्यज्यते । अन्यत्किं वा तव मुखविधुं त्वद्वदनचन्द्रं द्रष्टुम् अत एव उड्डीय गन्तुम् । वक्षो वक्षःस्थलं विसिनीपल्लवस्य च्छलेन तापापनोदार्थमिति भावः । पल्लवपदमसन्तं कोमलत्वशीतलत्वे व्यञ्जयति । छलेन व्याजेन पक्ष सृजति विरहदुःखाप्ततया ऽसूनां वहिष्प्रयाणे नायकमार्गदर्शनसम्भावन एव तापाऽपनोदकतया विसिनीपल्लवानां वक्षःसयोगे पक्षसृजनसम्भावना भवति । मन्दाक्रान्तावृत्तम् ॥ १२३ ॥

तस्यामिति । चेतसो गुरुत्वं सर्वेन्द्रियश्रेष्ठत्वं त्वन्नयने तैजसत्वाद् गुरुत्वाऽभावः । एवञ्च मच्चेतस्तस्यामेव लीनम् । नयनमपि तामेवाऽवलोकयितुमितस्ततो भ्रमति इति न मे ऽन्यत्सुखबाहुल्यमिति व्यज्यते ॥ १२४ ॥

संदर्शनसन्तोषयोः प्रकारजिज्ञासा चिन्तनम् । यथा ।

मया विधेयो मुहुरद्य तस्मिन्
कुञ्जोपकण्ठे कलकण्ठनादः ।
राधा मधोर्विभ्रममावहन्ती
कुर्वीत नेत्रोत्पलतोरणानि ॥ १२५ ॥

प्रियाऽऽश्रितचेष्टाद्युद्बोधितसंस्कारजन्यं ज्ञानं स्मृतिः । यथा ।

विप्रलम्भस्य दशावस्था निरूपयितुं तद्विभागमाह विप्रलम्भे चेति । तत्र प्रथमोद्दिष्टत्वादभिलाषं लक्षयति तत्रेति ।

तमुदाहरति तस्यामिति । कोऽपि पूर्वानुरागी वक्ति तस्यां सुतनुसरस्यां सुतनुरेव सरसी सरसत्वात् चेतो मानसं नयनं नेत्रम् अर्थात्स्वीयम् । निष्पतितं चक्षुः सर्वतो भ्रमति । यतो लघु । एवं च मच्चेतस्तस्यामेव लीनं नयनमपि तामेवाऽवलोकयितुमितस्ततो भ्रमतीति न मेऽन्यत्सुखावहमिति व्यज्यते । उपगीतिर्वृत्तम् ॥ १२४ ॥

चिन्तामुदाहरति मयेति । कृष्णः सखायं प्रति वक्ति । हे सखे मया तस्मिन् सङ्केतिते कुञ्जोपकण्ठे कुञ्जसविधे अद्य मुहुः कलकण्ठनादः कलहंसनिनादः कादम्बनिनादः । वसन्तस्याऽतिमधुरत्वादिति भावः । विधेयः कर्तव्यः । एवं सति एवं च सति मय्येवंविधे चेष्टमाने सा पश्येत् वा न वेति चेतो व्यज्यते । उपजातिर्नाम वृत्तम् ॥ १२५ ॥

मयेति । कलकण्ठः पिकः । मधोर्वसन्तस्य कुर्वीत । सम्भावनायां लिङ् । एवं चैवंविधचेष्टा तद्दर्शनाद्युपायः स्यादिति चिन्ता व्यज्यते ॥ १२५ ॥

रामो लक्ष्मणदीर्घदुःखचकितो नाऽऽविष्करोति व्यथां
श्वासं नोष्णतरं जहाति सलिलं धत्ते न वा चक्षुषि ।
वाताऽऽवर्तविवर्तमानदहनक्रूरैरनङ्गज्वरैः
क्षामः किं तु विदेहराजतनयां भूयः स्मरन् वर्तते॥ १२६॥

विरहकालीनकान्ताविषयकप्रशंसाप्रतिपादनं गुणकीर्तनम् । यथा ।

स्मृतिमुदाहरति राम इति । लक्ष्मणदीर्घदुःखचकितः लक्ष्मणस्य दीर्घं दुःखं तेन चकितो व्याकुलः । व्यथां नाऽऽविष्करोति न प्रकटयति । उष्णतरं श्वासं न मुञ्चति । एवं च दुःखस्याऽतिबहुलत्वादात्यन्तिकगोपनाऽनर्हत्वं व्यज्यते । चक्षुषि नेत्रे सलिलमश्रु न धत्ते । किं तु वाताऽऽवर्तविवर्तमानदहनक्रूरैः वातावर्तेन वात्यया विवर्तमानो यो दहनः । एवं च निर्गमाऽयोग्यत्वं जाज्वल्यमानत्वं व्यज्यते । तद्वत् क्रूरैः घातुकैः अनङ्गज्वरैः क्षामः कृशः विदेहराजतनयां सीतां भूयोऽनवरतं स्मरन् वर्तते तिष्ठति । एवं च स्वदुःखप्रकटने लक्ष्मणस्याऽतिदुःखं भावीति गोपयन् सीतास्मृतिजन्याऽन्तःसन्तापव्याकुल एवास्ते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १२६ ॥

गुणकीर्तनं लक्षयति विरहकालीनेति । एवं च संयोगकालीनव्युदासः ।

राम इति । चकितो व्याकुलः । वातावर्तो वात्या । एवं च स्वदुःखप्रकटने लक्ष्मणस्याऽतिदुःखं भविष्यतीति तद्गोपनात् सीतास्मृतिजन्यसन्तापव्याकुल एवास्ते इति भावः ॥ १२६ ॥

स्पर्शः स्तनतटस्पर्शो वीक्षणं वक्रवीक्षणम्।
तस्याः केलिकथाऽऽलापसमयः समयः सखे॥१२७॥

कामक्लेशजनितसकलविषयहेयताज्ञानमुद्वेगः। यथा।

गरलद्रुमकन्दइन्दुबिम्बं
करुणावारिजवारणो वसन्तः।
रजनी स्मरभूपतेः कृपाणी
करणीयं किमतः परं विधातः॥ १२८॥

तमुदाहरति स्पर्श इति। कोपि विरही वक्ति। हे सखे तस्या नायिकायाः स्तनतटस्पर्श एव स्पर्शः। स्पर्शपदं सुखविशेषजनकतां लक्षयन्नितरस्पर्शाधिकतमत्वं व्यञ्जयति। तथा च तस्या वक्रवीक्षणमेव वीक्षणम्। वीक्षणपदं सुखाऽतिशयजनकत्वं लक्षयन्नितरविलोकनाऽधिकतमत्वं व्यञ्जयति। पथ्यावक्त्रम्॥ १२७॥

उद्वेगं लक्षयति कामक्लेशजनितसकलेत्यादि। मुमुक्षोस्तथाविधज्ञानस्योद्वेगत्वनिवारणाय कामक्लेशजनितेति। तमुदाहरति गरलद्रुमेति। विरहिजनो वक्ति। इदम् इन्दुबिम्बमिन्दुमण्डलं गरलं विषं तस्य यो द्रुमः तस्य कन्दः। एवं चाऽतिदुःखदत्वं व्यज्यते। वसन्तः करुणावारिजवारणः करुणा दया सैव वारिजं कमलम्। आर्द्रचित्तभूमिकत्वादिति भावः।

स्पर्श इति। स्पर्शवीक्षणसमयपदानि सुखातिशयजनकत्वं लक्षयन्ति। इतरत स्पर्शाधिक्यं व्यञ्जयति॥ १२७॥

गरलेति। वारिजवारण इति पाठः। वारणो वारको गजश्च। अतिनिष्करुणश्चेत्यर्थः। धारण इति पाठे करुणा त्यक्तुमशक्येति भावः। तेन हृदयस्य निष्ठुरत्वकरणेपि तदभावो व्यज्यते इत्याहुः। तत्त्वज्ञानजन्यस्य तत्त्ववारणाय कामक्लेशेत्यादि॥ १२८॥

प्रियाश्रितकाल्पनिकव्यवहारः प्रलापः। कल्पनायाः कारणमन्तःकरणविक्षेपः। तस्य च निदानमुत्कण्ठा। यथा।

अद्विसंवीक्षणं चक्षुरद्विसंमीलनं मनः।
अद्विसंस्पर्शनः पाणिरद्य मे किं करिष्यति ॥ १२९॥

तस्य वारणः वारयतीति वारणः। वसन्ते हि कमलानामभावो भवेदिति भावः। वारणपदं दयोन्मूलनसमर्थतां व्यनक्ति। तथा रजनी रात्रिः स्मरभूपतेः कृपाणी। विरहिजननिकृन्तकत्वादिति भावः। एवं सति हे विधातः सर्वकर्तृत्वादुपालम्भयोग्यत्वं ध्वन्यते। अतः परमेतदुपरि किं करणीयम्। एवं च मरणमेव ममेदानीमुपस्थितमिति व्यज्यते। एवं च तवैतादृशवस्तुविरचना ऽनुचितेति द्योत्यते। उद्वेगः स्फुट एव। मालभारणीयोवृत्तम् ॥ २२८ ॥

प्रलापं लक्षयति प्रियाश्रितेति। प्रियाविषयक इत्यर्थः। काल्पनिकः अन्तःकरणविक्षेपो मनोविपर्यासः।

तमुदाहरति। अद्विसमिति। कापि सहचरीं प्रत्याह हे सहचरि मे चक्षुः अद्विसंवीक्षणं न द्वयोः संवीक्षणं यस्य तदतिरिक्ताऽनवलोकीत्यर्थः। तथा मे मनः अद्विसंमीलनं न द्वयोः संमीलनं यस्य। तथा तदतिरिक्तात्मापीत्यर्थः। तथा मे पाणिः। अद्विसंस्पर्शनम्। न द्वयोः संस्पर्शो यस्य तदन्याऽसंस्पर्शीत्यर्थः। अद्य किं करिष्यति। एवं च नयनादिकरण-

प्रियाश्रितः प्रियाविषयकः। काल्पनिकः कल्पनायुक्तः। तदन्याऽविषयकं नयनादिव्यापाराणां तद्विरहे केनोपायेन निर्वाहो भविष्यतीति भावः। औत्सुक्यं कालाऽसहिष्णुता। मनोविपर्यासो मनोव्याकुलता।

औत्सुक्यसन्तापादिकारितमनोविपर्यासससमुत्थप्रियाश्रितवृथाव्यापार उन्मादः । विपर्यासो व्याकुलव्यापारः । स च कायिको वाचिकश्च । कायिको यथा ।

प्रतिफलममृतांशोर्वीक्ष्य कान्तो मृगाक्ष्या
मुखमिति परिहासं कर्तुमभ्युद्यतोऽभूत् ।
अथ शिथिलितवाचो मानमाशङ्क्य तस्याः
स्पृशति पुलकभाजा पाणिपङ्केरुहेण ॥ १३० ॥

व्यापाराणां तदन्याऽविषयकत्वेन केनोपायेन निर्वाहो भवतीति व्यज्यते ॥ १२९ ॥

उन्मादं लक्षयति औत्सुक्येति । औत्सुक्यं कालाऽसहिष्णुता । मनोविपर्यासो मनोव्याकुलता । तं विभजते कायिक इति ।

प्रथमोद्दिष्टत्वात् कायिकमुदाहरति । प्रतिफलमिति । काचित्कांचिदाह कान्तः अमृतांशोः चन्द्रस्य प्रतिफलं प्रतिबिम्बं मणिमयकुड्यादाविति भावः । अवलोक्य प्रेक्ष्य । एतेन मुखभ्रान्तियोग्यत्वमावेद्यते । मृगाक्ष्या हरिणाक्ष्याः मुखं वदनमिति हेतोः परिहासमुपहासं कर्तुम् अभ्युद्यतोऽभूत् । उद्युक्तोऽभूत् । अथाऽनन्तरं शिथिलितवाचः त्यक्तवाचः तस्याः प्रियायाः मानमभिमानम् आशङ्क्य पुलकभाजा रोमाञ्चवता सात्त्विकभावोदयादिति भावः । पाणिपङ्केरुहेण करकमलेन स्पृशति । अनुनयार्थमिति भावः । अत्रोपमया ऽनुमाणितः संशयालङ्कारः । मालिनीवृत्तम् ॥ १३० ॥

प्रतिफलमिति । प्रतिबिम्बं स्पृशति । अनुनयार्थम् ॥ १३० ॥

वाचिको यथा ।

किं रे विधो मृगदृशां मुखमद्वितीयं
कन्दर्प दृप्यसि दृगम्बुजमन्यदेव ।
झङ्कारमावहसि भृङ्ग तनुर्न तादृक्
कर्माणि धिङ् न पुनरीदृशमीक्षणीयम् ॥ १३१ ॥

वाचिकमुदाहरति किं रे विधो इति । को ऽपि विरही वक्ति रे विधो चन्द्र । रे इति संबोधनं नीचतां गमयति । सा च प्रियाऽऽननाऽसमताम् । गर्वजनितेर्ष्यया किं दृप्यसि गर्वमावहसि अहं सुन्दर इति, इदं किं कुतः । यतो मृगदृशो नायिकायाः मुखं वदनम् अद्वितीयं सर्वोत्कृष्टताशालि । रे कन्दर्प मदन किं दृप्यसि अहमुन्मादक इति । इदं किं, कुत्सितम् । यतो मृगदृशो दृगम्बुजं नेत्रकमलम् अन्यदेवोन्मादकम् । एवं च कामिनीनयनमेवोन्मादकमिति व्यज्यते । किं च भृङ्ग भ्रमर झङ्कारं शब्दविशेषमावहसि । गर्वोद्रेकादिति भावः । इदं किम् । यतस्तादृक् तनुः तथाविधसौन्दर्योत्कर्षशालि शरीरं नास्तीत्यर्थः । एतादृशसम्भाषणमपि न समीचीनमित्याह कर्माणि एतादृशवच-

किं रे विधो इति । रे इति सम्बोधनं नीचत्वं व्यञ्जयति । तत्र प्रियाऽऽननसाम्यम । गर्वनिबन्धनेर्ष्यया किं दृप्यसि गर्वयसे । अहं तत्सम इति गर्वयसे यतो मृगदृशो मुखमद्वितीयम । उपमेयोपमानरहितम । हे कन्दर्प त्वं च किं दृप्यसि । मदायुधपुष्पसमूहमपीति तव किमर्थो दर्पः । यतस्तद् दृगम्बुजमन्यदेव । त्वदायुधकुसुमेभ्यो ऽन्यदेवाऽन्ना न तत्रापि गर्व उचित इति भावः । किं च हे भृङ्ग त्वं किं झङ्कारमावहसि । गर्वादिति भावः । इदमप्यनुचितमिति । यतस्तव शब्दमात्र्यपि न तादृशी तनुः । नः कर्माणि धिक् यानीदृशनायिकादर्शनप्रतिबन्धकानि । तदेवाह क्व पुनरिति ॥ १३१ ॥

मदनवेदनासमुत्थसन्तापकार्श्यादिदोषो व्याधिः । यथा ।

कोदण्डं विशिखो मनो निवसतिः कामस्य तस्या अपि
भ्रूवल्ली नयनाञ्चलं मनसि ते वासः समुन्मीलति ।
इत्थं साम्यविधौ तयोः प्रभवति स्वामिंस्तथा स्निह्यतां
तन्वाना तनुतां क्रमादतनुतां नैषा यथा गच्छति॥ १३२॥

नानि तथाविधव्यापारान् धिक् निन्द्यानीत्यर्थः । ईदृशमभिरूपशालि ईक्षणीयं कामिनीरूपं वस्तु पुनः क, दुष्प्रापमित्यर्थः । एवं च कामिनीप्राप्त्यनुकूला एव व्यापाराः समीचीना नान्ये इति द्योत्यते । वसन्ततिलकावृत्तम् ॥ १३१ ॥

व्याधिं लक्षयति । मदनवेदनेति । रोगादिजन्यकार्श्यादिनिरासाय मदनवेदनासमुत्थेति । तमुदाहरति कोदण्डमिति । कापि दूती नायकं प्रत्याह हे सखे तस्या नायिकायाः भ्रूवल्ली नयनाञ्चलं मनश्च कामस्य कोदण्डं धनुः । विशिखो बाणः । निवसतिः स्थानम् । यथा ऽस्ति तथा तस्याः भ्रूवल्ली नयनाञ्चलं मनसि वासस्तत्रापि समुन्मीलति वर्तते । यद्वा कामस्य कोदण्डः

रोगादिजन्यकार्श्यादिवारणाय मदनेत्यादि । यथा मदनस्य कोदण्डम् विशिखो बाणः मनो निवसतिः वर्तते तथा तस्या अपि कोदण्डस्थानीया भ्रूवल्ली विशिखस्थाने नयनाञ्चलं तेन तत्र मनसि स च वर्तते । तेन प्रकारेण तयोः कामिकामिन्योः साम्यविधौ प्रभवति सति यथा सा नायिका क्रमात्तनुतां दधाना अतनुतामनङ्गतां शरीरराहित्यं न प्राप्नोति तथा स्निह्यतां तस्यां मदनसाम्यमात्रेणैतस्यां कोपकरणमनुचितम् । यत एवं सति स्वरूपहानिरेव सम्पद्यते इति व्यज्यते । किं च स्वसाम्यमसहमानो मदनस्तत्प्राणापहारोद्यममपि करिष्यतीति । किं च एक एव मदनो विरहिप्राणिदमने समर्थः, अथ तस्यास्तद्रूपत्वे सति सत्साहाय्यसंभूतमदः किं नकरिष्यतीति च । स्वामिन्नित्यनेन स्वातन्त्र्योपदेशाऽनर्हत्वप्रार्थनौचित्यानि व्यज्यन्ते ॥ १३२ ॥

विरहव्यथाऽऽविष्कारमात्रमेव जीवनाऽवस्थानं जडता। यथा॥

पाणिर्नीरवकङ्कणः स्तनतटी निष्कम्पमानांशुका
दृष्टिर्निश्चलतारका समभवन्निस्ताण्डवं कुण्डलम्।
कश्चित्त्वार्पितया समं कृशतनोर्भेदो भवेन्नो यदि
त्वन्नामस्मरणेन कोपि पुलकारम्भः समुज्जृम्भते॥१३३॥

विशिखः मनो निवसतिस्थानं वर्तते। एवं च कोदण्डादीनां विशिखरूपाद्यनभिधानेन साधारण्यमावेद्यते। तथा तस्याः भ्रूवल्ली नयनाञ्चलं मनसि वासस्तवापि समुन्मीलति। एवं च मदनकोदण्डादिभ्यः कामिनीभ्रूवल्ल्यादीनामाधिक्यं व्यज्यते। इत्थमसुना प्रकारेण साम्यविधौ अर्थान्मदनस्य तव च प्रभवति सति यद्वा प्रभवति मदनकोदण्डाद्यधिककामिनीभ्रूवल्ल्यादिसत्त्वेन प्रकर्षशालिनि त्वयि साम्यविधौ साम्यविधिकर्तव्यता तस्यां सत्याम्। एवं च वस्तुगत्या त्वदधिका ऽप्यस्माभिः साम्ये क्रियमाणे सतीत्यर्थः। एवं च साम्ये सतीति वक्तव्ये विधिपदमधिकमिति न शङ्क्यम्। हे स्वामिन्। एतच्च प्रार्थनोचिसमावेद्यते। एवं चसम्बुद्ध्यन्तरमर्थवत्। तस्यां तथा स्निग्धताप्रेम क्रियतां यथैषा तनुतां कार्श्यं तन्वाना विस्तारयन्ती क्रमादवस्थान्तरात् अतनुतां तनुराहित्यम् अनङ्गत्वमिति यावत्। न प्राप्नोति। शार्दूलविक्रीडितं वृत्तम्॥ १३२॥

जडतां लक्षयति। विरहेति। तमुदाहरति पाणिरिति। दूती कां चित्प्रत्याह। स्पष्टम्। शार्दूलविक्रीडितं वृत्तम्॥१३३॥

पाणिरिति। निष्कम्पमानांशुकत्वेन प्राणानां कण्ठे स्थितिरावेद्यते। निश्चलतारकत्वं कटाक्षाद्यभावात्। निस्ताण्डवत्वेन विलासाऽभावः। कोपि सूक्ष्मतया ऽनिर्वचनीयः॥ १३३॥

निधनस्याऽमङ्गलत्वान्नोदाहृतिरुदाहृता । स्वप्नचित्रसाक्षाद्भेदेन दर्शनं त्रिधा । तत्र स्वप्नदर्शनं यथा ।

मुक्ताहारं न च कुचगिरेः कङ्कणं नैव हस्तात्
कर्णात्स्वर्णाभरणमपि वा नीतवान्नैव तावत् ।
अद्य स्वप्ने वकुलमुकुलं भूषणं सन्दधानः
कोयं चौरो हृदयमहरत्तन्वि तन्न प्रतीमः ॥ १३४ ॥

चित्रदर्शनं यथा ।

नीवीं हरेदुरसिजं विलिखेन्नखेन
दन्तच्छदं च दशनेन दशेदकस्मात् ।
इत्थं पटे विलिखितं दयितं विलोक्य
बाला पुरेव न जहार विहारशङ्काम् ॥ १३५ ॥

दर्शनस्याऽवस्थामूलकत्वात्तद् विभजते स्वप्नेत्यादि । तत्र प्रथमोद्दिष्टत्वात्स्वप्नदर्शनमुदाहरति मुक्ताहारमिति । हारपदं चौर्ययोग्यतां ध्वनयति । न च कुचगिरेः हृतवान् चोरितवान् हस्तात्कङ्कणं रत्नखचितमिति भावः । कर्णाभरणमपि कर्णालङ्करणमपि । अद्य स्वप्न निद्रायाम् वकुलमुकुलं वञ्जुलकुड्मलम्

मुक्ताहारमिति । गिरित्वेन चौरसञ्चरणयोग्यता । वकुलो वञ्जुलः । एवं च बाह्यवस्त्वपकारकः केवलहृदयापहारी विलक्षणोऽयं चौर इति द्योत्यते ॥ १३४ ॥

नीवीमिति । बालात्वेन भ्रमयोग्यता । विहारः क्रीडा । विहारशङ्कामाह । नीवीं हरेदित्यादिना । चेतश्चञ्चलतां व्याकुलतां विषयान्तरेच्छामिति यावत् । प्रियसखीत्वेन मदुक्तमवश्यं विधेयमिति व्यज्यते ॥ १३५ ॥

साक्षाद्दर्शनं यथा ।

चेतश्चञ्चलतां त्यज प्रियसखि व्रीडे न मां पीडय
भ्रातर्मुञ्च दृशौ निमेष भगवन् काम क्षणं क्षम्यताम् ।
बर्हं मूर्धनि कर्णयोः कुवलयं वंशं दधानः करे
सोयं लोचनगोचरो भवति मे दामोदरः सुन्दरः ॥१३६॥

भूषण सन्दधानः । एवं च निकुञ्जवमतिलालसत्वमावेद्यते । हृदय मचित्तमहरत अयं कश्चौर इति न प्रतीमः न जानीमः । एवं च बाह्यदृश्यभूषाऽपहारकास्तस्कराः सन्ति विदिताः, परं तु आन्तराऽदृश्यहृदयापहारी न कोपि विदित इति द्योत्यते । मन्दाक्रान्तावृत्तम्॥ १३४ ॥

चित्रदर्शनमुदाहरति नीवीमिति । का चित्कां चिदाह बाला मुग्धा । एवं च भ्रान्तियोग्यत्वं ध्वन्यते । पटे विलिखितं चित्रितं दयितम् । एवं च दर्शनयोग्यत्वं ध्वन्यते । विलोक्य पुनेव पूर्ववत् किमयं नीवीं हरेत् मोचयेत् तथा उरसिजं कुच नखेन विलिखेत् नखक्षतानि दद्यादित्यर्थः । तथा दन्तच्छदमधर दशनन दन्तेन अकस्मादतर्कितं दशेत् । इत्थं विहारशङ्कां केलिभयवितर्कं न जहार न तत्याज । वसन्ततिलकावृत्तम् ॥ १३५ ॥

साक्षाद्दर्शनमुदाहरति चेत इति । नायिका का चित्स्वचित्तादीन् प्रत्याह हे चेतः चञ्चलतां व्याकुलतां विषयान्तरेच्छां मां प्रियदर्शनोद्युक्तां भ्रातर्निमेष त्वं दृशौ मुञ्च । दर्शने स्वमन्तरायो मा भूरित्यर्थः । भगवन् काम भगवत्त्वेन क्षमायोग्यता । क्षम्यताम् । मनसो ऽवधारणार्थमिति भावः । बर्हं मयूरपिच्छम् । सोयं प्रसिद्धविभव । एतच्च स्पृहणीयदर्शनत्वम् । दामोदरत्वेन व्यसनपालिता । तेन दुर्लभत्वं लोचनविषयो भवति ॥ १३६ ॥

माध्वीकस्यन्दसन्दोहसुन्दरीं रसमञ्जरीम्।
कुर्वन्तु कवयः कर्णभूषणं कृपया मम॥ १३७॥
तातो यस्य गणेश्वरः कविकुलाऽलंकारचूडामणि-
र्देशो यस्य विदेहभूः सुरसरित्कल्लोलकिर्म्मीरिता।

त्यज। हे सखि प्रियसखि। एवं च मदुक्तमवश्यं विधेयमिति व्यज्यते। व्रीडे लज्जे मां प्रियदर्शनोत्कां न पीडय। मनीषित-भङ्गाविति भावः। तथा भ्रातर्बन्धो। दर्शनसुखदातृत्वादिति भावः। निमेष पक्ष्मपात दृशौ नेत्रे मुञ्च। तावानेऽवान्तराय इति भावः। तथा काम क्षण क्षम्यताम्। मनसो ऽवरोधना-र्थमिति भावः। किमर्थमित्यत आह। मूर्द्धनि मस्तके बर्हं म-यूरपिच्छं कर्णयोः कुवलयं करे वंशं दधानः सोयं प्रसिद्धवि-भवः सुन्दरः। एवं च स्पृहणीयदर्शनत्वं ध्वन्यते। दामोदरः श्रीकृष्णः। एवं च व्यसनशालित्वं तेन च दुर्लभदर्शनत्वमावे-द्यते। लोचनविषयो भवति। शार्दूलविक्रीडितं वृत्तम्॥ १३६॥

ग्रन्थसमाप्तिं सूचयन् कविः स्वकृतग्रन्थश्रवणाऽङ्गीकारं प्रार्थयते माध्वीकेति। माध्वीकस्य मधुनः स्यन्दः प्रस्रवः तस्य सन्दोहः सारसंग्रहस्तेन सुन्दरी मनोहरा। अथ वा माध्वीक-स्यन्दसन्दोहा चासौ सुन्दरी चेति विग्रहः। रसमञ्जरी ग्रन्थ-नाम। कृपया कवयः कर्णभूषणं कुर्वन्तु। शृण्वन्तु। अन्या मञ्जरी माध्वीकस्यन्दसन्दोहसुन्दरी कर्णाऽवतंसीक्रियते इति लौकिकम्॥ १३७॥

तात इति। यस्य कविकुलाऽलङ्कारचूडामणिः कविवर्गा-

स्यन्दसन्दोहः प्रस्रवसारसंग्रहः। तेन सुन्दरीं तद्वती चासौ सुन्दरीति वा॥ १३७॥

पद्येन स्वकृतेन तेन कविना श्रीभानुना योजिता
वाग्देवीश्रुतिपारिजातकुसुमस्पर्द्धाकरी मञ्जरी ॥१३८॥

इति श्रीमद्भानुदत्तविरचिता रसमञ्जरी संपूर्णा ॥

लङ्कुरणशिखामणिः गणेश्वराख्यस्तातो जनकः। तथा यस्य सुरसरितो भागीरथ्याः कल्लोलैर्जलतरङ्गैः किर्म्मीरिता चित्रिता। चित्रं किर्मीरकल्माषेत्यमरः। वाग्देव्याः सरस्वत्याः श्रोत्रे यत्पारिजातकुसुमं तत्सदृशी मञ्जरीव जयतु आकल्पं तिष्ठतु। शार्दूलविक्रीडितं वृत्तम् ॥ १३८ ॥

इति श्रीमदनन्तपण्डितविरचिता व्यङ्ग्यार्थकौमुदी नाम
रसमञ्जरीव्याख्या संपूर्णा।

पद्येनेत्येकत्वमविवक्षितम् ॥ १३८ ॥

इति श्रीकालोपनामकशिवभट्टसुतनागेशभट्टकृतो
रसमञ्जरीप्रकाशः समाप्तः।

शुभम् ॥

---

BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS:
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T H GRIFFITH, M. A., C. I. E.
AND
G THIBAUT, PH. D.
*Nos 83. 84. & 87.*

# रसमञ्जरी ।

श्रीभानुभट्टप्रणीता
अनन्तपण्डितकृतव्यङ्ग्यार्थकौमुद्या
नागेशभट्टकृतप्रकाशेन च सहिता ।

# RASAMANJARI

BY

BHÂNU BHATTA,

*With the Commentaries*

VYANGYÂRTHAKOUMUDÎ OF ANANTA PANDIT
AND PRAKÂSA OF NÂGESA BAHTTA

EDITED BY

Râma Sâstri Tailanga,

PROFESSOR, GOVT. SANSKRIT COLLEGE, BENARES.

BENARES
*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H D GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ vilas Press,
BENARES.
1904.

# सव्याख्यरसमञ्जर्याः शुद्धिपत्रम् ।

| पृ० | प० | अ० | शु० |
| --- | --- | --- | --- |
| ३ | ८ | दन्द. | द्वचन्द्र. |
| ४ | ७ | लास्या | लाऽऽस्या. |
| १० | १ | भङ्ग- | भृङ्ग- |
| १६ | ५ | त्वेक्. | त्वेक्ष. |
| २० | ९ | नात् । | नात् |
| २८ | २२ | सुर. | सुत्र. |
| २९ | २ | नीवी | नीवी- |
| २९ | १० | यामो. | यामौ. |
| ३० | २१ | नारु. | तारु. |
| ३२ | ४ | पिधा. | विधा. |
| ३७ | २ | करा इ. | करादि. |
| ४० | १८ | र्तव्य. | र्तव्यत्व. |
| ४८ | १८ | दिन | दिना |
| ४९ | १७ | निव. | निव. |
| ५० | ७ | त्यर्यः | त्यर्थः |
| ५२ | २१ | यवा. | पचा. |
| ५२ | २१ | रती. | री. |
| ५७ | २१ | वदन्ति | वदति |
| ५९ | १७ | हस्तङ्कु. | हस्ताङ्कु- |
| ६० | २ | कोपप. | कोप. |
| ६० | १६ | लुपाकृ. | लुषीकृ. |
| ६१ | १ | ऽननां | ऽऽननां |
| ६१ | ११ | काननमम. | काननम. |
| ६४ | ५ | क्रीतं | क्रीडितं |
| ६४ | ९ | पाटः | पाठः |
| ६६ | ८ | मर्पि | मपि |
| ६७ | ५ | शालिती | शालिनी |
| ६७ | १९ | सम्भवती. | सम्भवी. |
| ७२ | ९ | नगोग्य. | नयोग्य. |
| ७२ | १३ | लमल्लि. | लवल्लि. |
| ७३ | ९ | लमल्लि | लवल्लि. |
| ७३ | २४ | चा"त्राऽस | चाऽत्रा"ऽस- |
| ७५ | १६ | देवं | देव |
| ७९ | २१ | लकिका | लतिका |
| ८० | ३ | गडस्य. | गण्डस्य. |
| ८३ | ५ | विवरह. | विरह. |
| ८४ | १७ | तरणी | तरुणी |
| ८५ | १३ | आननान | आततान |
| ८६ | ४ | किं चित् कु | किञ्चित्कु. |
| ८६ | १८ | योभ्रान्ता | योर्भ्रान्ता |
| ८७ | ८ | देशेन | देशेनेति |
| ८७ | १३ | मगन. | गमन. |
| ९० | १५ | यां विना ध. | यां ध. |
| ९५ | १८ | प्रियमुक्त. | प्रियभुक्त. |
| ९६ | १४ | मता | भर्ता |
| ९६ | २२ | पवव. | पव व. |
| ९८ | ५ | नैत्रयोः | नेत्रयोः |
| १०० | १३ | गोस्खलन | गोत्रस्खलन. |
| १०१ | १० | ऽनोचित्यं | ऽनौचित्यं |
| १०३ | ७ | वदयति | वेदयति |
| १०४ | १९ | तिर्यग्व | तिर्यग्वि. |
| १०७ | ११ | थानायकानां | थानायिकानां |
| १०८ | १६ | निर्यक्तिक. | निर्युक्तिक. |
| १०८ | १९ | गर्वाय | वर्गाय |

| पृ० | प० | अ० | शु० |
|---|---|---|---|
| ११० | १७ | मर्तुका. | मर्तृका. |
| ११५ | ६ | हरिपेद | हरिपदेन |
| ११७ | २० | गय्यतीव | मय्यतीव |
| ११८ | २१ | गवपणे | गवेषणे |
| ११९ | १० | पतयां | पतां |
| १२२ | ७ | मेंत्सितः | र्मेत्सितः |
| १२४ | ८ | मान्यन्यत्र. | मान्यत्र. |
| १२८ | २० | थानये | या नयने |
| १२९ | ५ | रोरति | रोरिति |
| १३१ | १० | रीरपदं | रीपदं |
| १३२ | ९ | तर्वत्रा. | सर्वत्रा. |
| १३८ | २२ | न्तमिर्ति | न्तमिति |
| १३९ | ६ | तख्यापि | सख्यापि |
| १४२ | १४ | मूर्धि | मूर्ध्नि |
| १४२ | १५ | मूर्धि | मूर्ध्नि |
| १४६ | १० | अयापि | अद्यापि |
| १४९ | १ | प्रतिपव. | प्रतिपेत्र. |
| १४९ | २५ | तुष्पयो. | पुष्पयो. |
| १५१ | ३ | सि जो | सिजो. |
| १५२ | २२ | मावः॥६२॥ | मावः। |
| १५३ | २५ | ६३ | ६२ |
| १५५ | ९ | करु. | कर. |
| १५७ | १७ | स्मेरो- | स्मेरा- |
| १५९ | ७ | कनके. | कनकके. |
| १६५ | १९ | वष्टम्माः। | वष्टम्भाः। |
| १६७ | १३ | नागन्याङ्गना | नामन्याङ्गना |
| १७३ | १० | विक्रीतं | विक्रीडितं |
| १७५ | २५ | निशामु | निशासु |
| १७८ | २३ | अत्राये | अत्रार्थे |
| १७९ | ७ | घत्रे | दध्रे |
| १७९ | १७ | माहं | माह |
| १८१ | ९ | विनिमक. | विनिगमक. |
| १८१ | १० | सम्भो. | सम्भोग. |
| १८१ | १२ | क्रिडितं | क्रीडितं |
| १८३ | २६ | जीतिने. | जीविते |
| १९० | ६ | विक्रीतं | विक्रीडितं |
| १९३ | १० | देर्ध्य | दैर्घ्य |
| १९४ | १६ | कल्पतेव | कल्पलतेव |
| १९४ | १८ | तुत्र. | दुत्र. |
| १९६ | १० | प्रयसि | प्रेयसि |
| २०० | ६ | लिपटली | ऽलिपटली |
| २०२ | २५ | कल्पाण. | कल्याण. |
| २०६ | १३ | प्रकाशश्यते | प्रकाश्यते |
| २०७ | १९ | उपय- | उभय. |
| २११ | १९ | उक्तत्वन- | उक्तत्वेन |
| २२० | २२ | त्यगः | त्यागः |
| २२१ | ११ | लीवचन | लीनचत्रन |
| २२४ | १४ | मार्गें | मार्गे |
| २२६ | १ | भङ्गी वनं | भङ्गीर्वनं |
| २२६ | ४ | दानि | दूति |
| २२७ | १७ | अनाचित्य. | अनौचित्य- |
| २२९ | ३ | स्फूजति | स्फूर्जति |
| २३१ | ७ | विकीडितं | विक्रीडितं |
| २३२ | १७ | कोहरणा- | कोदाहरणा- |
| २३६ | १० | त्वत्यर्थं | त्वत्पथं |
| २३९ | ४ | कन्दइन्दु | कन्द इन्दु- |
| २४३ | २६ | नकरिष्य- | न करिष्य- |
| २४४ | १६ | चसम्तु- | च सन्तु- |
| २४७ | ८ | नेऽत्रान्त- | नेवाऽन्त- |

टि० ६३ लोकस्य प्रकाशः पुस्तकद्वये ऽपि नोपलभ्यः ।

# रसमञ्जरीविषयसूची ।

# रसमञ्जरीधृतानां श्लोकानां वर्णक्रमेण सूची ।

## रसमञ्जरीप्रतिपाद्यविषयाणां वर्णक्रमाऽनुसारिणी सूची ।



# सूचीपत्रम्।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | १ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( जिल्द -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ६ |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | ० | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ५ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ४ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |

# विज्ञापनम् ।

—:०:—

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ३ | ३ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ३ | ३ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यं | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् | ४ | ० |
| विवरणोपन्यास. सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचित) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |
| पातञ्जलदर्शनम् ।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० | १ | ० |
| व्याकरणमिताक्षरा ।सर्वतन्त्रस्वतन्त्रश्रीमदन्नंभट्टप्रणीता ख० ४ | ४ | |
| रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः | १ | ० |
| न्यायलीलावती ( यन्त्रस्था ) | ० | ० |




ब्रजभूषण दास और कम्पनी

चांदनीचौक के उत्तर नई सड़क बनारस ।